

सौम्य ! बहु दृष्टवानसि बहु च द्रक्ष्यसि । परं व्याकरोमि रहस्यम् । बहुदृष्टानामपि बहु द्रष्टव्यं विद्यते, बहुश्रुतानामपि बहु श्रोतव्यमवशिष्यते, बहुगतानामपि बहु गन्तव्यं चकास्ति, बहु प्राप्तानामपि पुरु प्राप्तव्यं विराजते, बहुतिथं भूयिष्ठमधीतानामपि बह्वध्येतव्यमास्ते । अतः सखे ! सखेदं मयेदं विज्ञाप्यते यन्नौचितीमञ्चति तवेदं व्याहरणं यन् 'मया बहु विलोकित' मिति । सकृदपि चेद् द्रक्ष्यसि सर्वङ्कषनिरीक्षितेन तर्हि ज्ञास्यसि यन्नूनमद्यापि दृष्टश्रुताधीतेषु बहु सावशेषमिति । यत एकस्मिन् वस्तुनि द्रष्टव्यानामानन्त्यमन्तर्हितं तिष्ठति यन्नैकपद एव सामान्यविहङ्गमालोचितेन साक्षात् कर्तुं पार्यते ।



# ज्योतिःस्फुलिङ्गाः





साहित्यनिकाय - व्यवस्थापकः

चन्दनमुनिः

छाजेर - प्रकाशन

C P

छाजेर - प्रकाशन
'शान्ति - भवन'
शा० मांगीलाल शान्तिलाल एण्ड कं०
६७, आरमुगम मुदलियार लेन
बेंगलूर - २ A.

प्राप्ति - स्थान :
'शान्ति - भवन'
शा. मांगीलाल शान्तिलाल एण्ड कं०
६४, ए० एम० लेन, चिकपेट
बेंगलूर - २ A.

*

शा. बस्तीमल जी ताराचन्द जी
'शान्ति-निवास'
सिरियारी (पाली) राजस्थान

*

मूल्य : सजिल्द रु० २-००
अजिल्द रु० १-५०

*

प्रथमावृत्ति १९६८
२०००

JYOTISPHULINGA—
— CHANDANMUNI

अर्थ - सौजन्य :
श्री ताराचन्द छाजेर

*

धारक :
सोहनलाल चण्डालिया
(राजलदेसर)

*

प्रबन्धक :
ब्रह्मदेव सिंह

*

मुद्रक :
साधना प्रेस
६९/१, ५ वाँ मेन रोड
बेंगलूर - ९

इदं ज्योतिःस्फुलिङ्गानाम्

भूयाद्

विद्यार्थिनां कृते

चन्दनमुनिः

श्रीमत्स्वर्गीय - पितृपाद - बस्तीमलजी - छाजेरस्य

'पुण्यस्मृतौ'

सिरियारी (राजस्थान) वास्तव्य

श्रीताराचन्द्रेण आर्थिकः सहयोगः

प्रदत्तः

# स्वतः

सन्ति नाम दुरधिगम-तात्पर्य-धुरन्धराणि नानाविध-शब्दार्थालङ्कार-रसध्वनिविच्छित्तिबन्धुराणि प्रस्फुटत्श्लेष-विश्लेषसुन्दराणि बहूनि भव्यानि काव्यानि। चक्रव्यूहभेदवत् तत्रान्तर्विगाहनं नाल्पाभ्यासिजनेन सुशकम्। तत्र तु सव्यसाचिसब्रह्मचारी कश्चिद् विपश्चिदपश्चिमः प्रवेष्टुमलम्। अभ्यासकाले तु श्रवणमात्रसुगमाः सहजशुचिबोधरुचिरा अलम्बायमानसमस्तपदावलिहृद्याः दैनन्दिनजीवनविद्यावदाताः सरसाः पाठाश्छात्राणां कृते भृशमौचित्यमञ्चन्ति।

पुनरिदानीन्तनेऽहसि नृप-नगर-नायिकादिवर्णनान्यपि वर्णितानि न वर्णत्वमश्नुवते। अद्य तु प्रथमपाठस्य पौरस्त्यपङ्क्तावेव किञ्चिज् जीवनोपयोगि वस्तु प्रेक्षितुमिच्छन्ति प्रेक्षाकुशला ऐदंयुगीना बालाः। गतगता सा जरठाऽर्थवगमशून्या पटुपाठरटन-परम्परा पारेसमुद्रम्, सम्प्रति तु अन्वर्थावबोधं पाठान् कण्ठीकर्तुमुत्सहन्तेतरां ते।

तादृशे समये गीर्वाणसरस्वतीनदीष्णातैर्विबुधैरपि तादृशी चेत् पठनसामग्री उपढौक्येत छात्राणां पुरतस्तदानीं नूनं तां ते सहर्षं जिघृक्षन्तीति मामकं मतम्।

एषु लघुनिबन्धेषु तादृग् जीवनार्हं तत्त्वं किञ्चिदुपढौकयितुं प्रयतितं मया। परितः अनेकानुलोम-प्रतिलोम-परिस्थितिपरवशे परिस्फुरद्गाढान्धतमसबहलपटले किंकर्तव्यविमूढे पञ्चजने कथं तत्र सपौरुषेण भाव्यमिति सूचितमेतेषु यथास्थानम्। क्षान्त्यादिधर्माणां विशेषताभिः कथंकारं जीवनं सहजसुहितं भवतीति कुत्रचित् प्रकटितम्। क्वचिद् नैसर्गिकसुषमादर्शनपुरस्सरं आनन्त्येन सार्धमैक्यमासूत्रणेन च सहजजीवनसौन्दर्यमाविर्भावितम्।

अतोऽमी पीयूषकणिकायमाना ज्योतिःस्फुलिङ्गायमाना वा लघवोऽपि निबन्धाः सर्वत्र उपयोगितामेष्यन्तीति निश्चप्रचम्।

वि.सं. २०२५ कार्तिकज्ञानपञ्चम्याम्<br>मैसूरप्रान्तान्तर्गत-बेंगलूरनगरे

चन्दनमुनिः

# विषयानुक्रमः

# FOREWORD

Muni Sri Chandanmallji, a noted disciple of Acharya Sri Tulsi, the celebrated sponsor of the Anuvrath movement, is the author of this little book of meditations in Sanskrit. A Punjabi by birth, Sri Chandanmallji, joined the holy order of jain ascetics when he was hardly nine years old. He has written several books in Hindi and nearly ten books in Prakrit and Sanskrit. A good scholar well-versed in both Jainism and Vedanta, Sri Chandanmallji reveals in his writings a sensibility which is rooted in its heritage and is yet sensitive to its contemporary setting.

This book contains a series of beautiful meditations on life, couched in easy and limpid Sanskrit. Sri Chandanmallji, who is in his fifties, writes out of a depth of maturity and experience. The reflections that he offers on life have no metaphysical involvements; nor are they merely didactic effusions, hortatory in nature. They are the spontaneous outbursts of a balanced and sensitive personhlity, an idealist who is eager to share with his fellow-men the exhilaration and the ardent delight of his idealism. He can write on such overworn topics as love, forgiveness, mellowness, truth, renunciation, celibacy, diligence and self. restraint with beauty and grace. What he writes is in essence, felt thought or intuitive thinking. These beautiful effusions have the liberating effect that one experiences in writings like those of Khalil Gibran, I welcome this little book of meditations.

Bangalore
29th Oct. 1968

**V. K. Gokak**
Vice-Chancellor,
Bangalore University.

# अधुनैव विधत्स्व

सौम्य ! यद्यस्ति कापि चिकीर्षा तर्हीदानीमेवोद्यतो भव । किं कमपि सौवर्णमवसरमनुसर्तुं प्रतीक्षसे ? एवं चेदुद् बुध्यस्व भ्रातः ! मा वृथा समया-क्षथाः । यतो हि स्वस्वगौरवविलक्षणास्सर्वेऽपि क्षणा ननु काञ्चनाञ्चिता एव यदि ते पौरुषरसायनेन सिक्ताः स्युः । पौरुषं हि तृणमपि शक्नोति गोरसं कर्तुम् । अतो हस्तय समस्तया स्वया शक्त्या किमपि विश्वस्तमार्यं कार्यम् । कठिनमिति विभाव्य मा भैषीः । कथमहं पारं प्राप्स्यामीति पूर्वमेव मा शुचः । मया क्रियमाणं सुजनैः सम्भावितं भावि न वेति संशीतिवीथिषु मा मुहः । मा च विस्मार्षीर्यज्जटिलमपि कठिनमपि दुःसाध्यमपि प्रतीयमानं कर्म नूनं कर्मठकरोपात्तं सरलं साधीयश्च सम्पद्यते । अनवरतं रतः कर्मणि धृतव्रतस्त्वमवश्यं यशस्यं परिणामं वश्यं करिष्यसीत्यत्र नाल्पीयानारेकः । हार्दिकश्रमस्वेदसुरभिसमुपबृंहितं तत् कृत्यं प्रभावि सद्भिः सम्भावितं च कथं न भावि ? मात्रमत्रापेक्ष्यते संलग्नस्वस्थता तावकीना । विभावय मित्र ! विश्वस्मिन्नत्र प्रकृत्यैव समुल्लसतितरां प्रतिपरमाणवनन्तप्रसरा प्रसृमरा शक्तिः । उद्युङ्क्ष्व, विधेयमधुनैव विधत्स्व । '**अयं हि समयः सौम्य ! पूर्वामासीदनागतः ।**'

●

चन्दनमुनिः

# परापेक्षा लघीयसी

अध्वन्य ! चतुष्पथे स्थितः किमु कमपि सहयायिनं प्रतीक्षसे ? किमेकाकी व्रजन् बिभेषि ? कर्णाकर्णिकयाऽऽकर्णितानां पश्यतोहराणां पथदस्यूनामन्तःपात्याकस्मिकाक्रमणदुष्कल्पनया कीलितोऽसि कच्चित् ? किं कम्पयते त्वामध्वनि समापतिष्यतां दुर्घटघटनापटीयसां सिंहव्याघ्रादिवन्यपशूनां मृगयाविहारः ? किं प्रेङ्खोलयति त्वां दिङ्मोहजनितां भ्रमितकापथानां भ्रान्तिः ? उत खिन्नयति दुरारोहावरोहा दुःसहकण्टकशर्करावकीर्णा पार्वती पृथिवी ? आहोस्विद् दुराराध्यं त्वयैकेन पथि गच्छताऽनैच्छिकं चिराय मुनिव्रतम् ? अथवा गत्वापि गन्तव्यं कस्यातिथ्यमुररीकरणीयमनुपलक्षितेन मयेति कुशङ्काशङ्कुकीलितं मनस्ते ? वयस्य ! संशीतिशीतकस्य ते नात्र चतुष्पथे सुकरं समाधानम् । समाधित्ससि चेद्द्विकल्पशतघ्नीक्षतं, चिन्तनं चूर्णीकृत्य सर्वं शुभमिति भावयन् सोत्साहमग्रे प्रतिष्ठस्व । शक्तिसमुल्लसितं साधीयश्चरणविन्यासं च कुरु । न चिराद्द्रक्ष्यसि यत् पथि प्रवृत्तस्य ते पदपङ्क्तिमनुकुर्वाणाः कुतः कुतः, के के, अप्रत्याशासिता अनुपदीनाः सहाध्वनीना भवन्तीति । तान् विलोक्य त्वं विस्मयस्फारलोचनः सम्पत्स्यसे । यथा यथा भविष्यति ते गत्वरपदसंचरणं तथा तथा कल्पिताशङ्कानां कुज्झटिकाया अपि स्वत एवापसरणमिति रम्यं गम्यपदमधिकृत्य नूनं मोदमेदुरस्त्वं भविष्यसि । अतो मा स्थाः परापेक्षीभूय । व्रज स्वाधीनं वर्त्मनि । परापेक्षा हि लघीयसी । आत्मनिर्भरतैव त्वामानन्दयिष्यतीति दृढं विश्वसिहि ।

●

## नवनवोल्लासा प्रकृतिः

अस्मिन् विश्वस्मिन् संसारे यत्र यत्र प्राकृतिकं यत्किञ्चन विलोकामहे सर्वत्र तत्र कोऽपि नवोल्लासो लोचनयोरवतरति। अत एव स्यात् केनचन भारतीयतत्त्वकोविदेन महर्षिणोक्तम् **'नवो नवो भवति जायमानः।'** अत एव ध्वंसेऽप्यत्र काचनान्तश्छन्ना पृष्ठभूमिर्विलोक्यते। पश्यत, प्लुष्टमपि न किं प्ररोहतितरामुत्कृष्टं क्षेत्रम्? स्वरूपनष्टान्यपि बीजानि काले कल्पयन्ति शस्यश्यामलामिलाम्, पतन्ति पुरातनानि पत्राणि प्रादुर्भवन्ति च पेशलानि पल्लवानि। वृन्ताग्राणि विमुच्य च्यवन्ते प्राप्तावसानानि म्लानमुखानि पुष्पाणि विकसन्ति च तत्र स्फुरत्स्फारसुरभिस्मेराणि सद्यस्कानि सुमानि। वृक्षेभ्यो विशीर्णान्यपि फलानि पुनः क्वापि भवन्ति फलभाञ्जि। दिनावसानं दर्शयन्त्यपि दोषा पोषयति नीरवशान्त्या जीवलोकम्। सायमस्तंगतोऽपि प्रगे पुनरुदयाधिरूढो भानुमान् भूरि भूरि भव्यैर्भावैर्बिभर्ति जीवान्। यौवनह्रसिमानमाप्नुवन्त्यपि प्रसवित्री प्रसूते विततशावितताति वंशाङ्कुरकन्दलनबन्धुराणि बहून्यपत्यानि। अहो! मरणेऽपि विलसति गोपायिता काचन जीवनदीधितिः। मुधैव कामप्यकल्पनीयां दुश्चिन्तासारां घटनां निभालयन् मनुष्यः स्विद्यति, खिद्यते, ग्लायति, म्लायति, शोचति, शुष्यति, परिदीव्यति, त्रस्यति च। परं नेदं मनाग् विभावयति यदनिरुद्धप्रचारा नवोल्लाससारा प्रकृतिरघटितव्यं न घटयति किमपि घटितव्यं च पुनर्न वर्जनाशतेनापि श्लथयति। अतस्तत्र कृतं परिदेवितेन। दुराशामुखेषु मृगतृष्णिकापयःस्पूरनिपातेनालम्। यतो हि नित्यं नवोदितेन समुल्लसन्ती प्रकृतिर्न कामपि वितथनिषेधवाचं कस्यापि उररीकरोति।

# निपतन्तु प्रत्यूहाः

प्रिय ! कृतघ्नैर्विघ्नैर्हताशो मा भूः । दृष्टं किमुप्तमात्रं बीजं फलेग्रहि ? प्ररोहात् पूर्वं कति न निपतन्ति तत्र पवनातपहिमवर्षादयः प्रतिकूलाः प्रत्यर्थिनः प्रत्यवायाः ? तांस्तितीक्षया सहमानो हि क्षुपो यथावेलं भवत्युद्यानशोभां वहमानः । वस्तुतस्तु प्रत्यूहा न भवन्ति प्रत्यूहा यतस्तेष्वेवान्तश्छन्ना विलसत्येष्यतः साफल्यप्ररोहस्य वीथिः । समुन्मिषन्ति च तेष्वेव नवनवोल्लासा आशाः । जृम्भन्ते च तेष्वेव केऽप्यतर्किताः सिद्धिसध्रीचीनाः पन्थानः । अङ्गुलिपर्वसु नर्तितनामधेया महामनसस्त एव यैरन्तरायसानुमतां क्षोदेषु प्रादुष्कृतो मार्गः । अपि च किमेकेनैवाह्नाऽजनि जनितकल्पान्तस्य रुद्रभृकुटि-भीषणस्य 'अणुबमा' ख्याख्यातस्य महाकालमित्रस्याविर्भावः ? न किं तत्रान्दोलिता चत्वारिंशद्वर्षाणि यावदनुसन्दधतां पुरत आशानिराशान्तरिता द्वैधदोला ? बद्धः किमेकपद एव महाजलनिलयो 'भाखरा' ख्यो बन्धः ? कतिवारं तत्र न समापतिताः कृतं भूमिसात् कुर्वाणाः प्रकटापाया महान्तो दुर्घटाश्चान्तरायाः ? किं वैकेनैवान्दोलितेन, बलिदानेन, महाभियानेनावापि स्वातन्त्र्यं भारतभुवा ? बहुतिथं समयमतियाप्य नैरन्तर्येणागणितां यातनां कदर्थनां प्रत्यूहश्रेणिं धिक्कारांश्चापि सोढ्वा, काराः कृष्णमन्दिरसारा आकलय्य, यमरज्जुं पुष्पमाल्यमिव मृत्युवधूपरिणयस्रजमिव साग्रहं कण्ठेषु निक्षिप्य, एकपदे असूनस्यतीर्भुशुण्डिका अविगणय्य, स्मृतिशेषतां स्वीकृत्य समधिगतं सौभाग्यं भारतीयैर्यत् स्वतन्त्रतानाम । अलं बहुना, वस्तुतस्त एव जीवनार्हा जगति ये प्रत्यूहव्यूहैः खलीकृता अपि, विघ्नाटवीप्रच्याविता अपि 'निपतन्तु प्रत्यूहा' इति तानुपेक्षमाणा, अवजानानाः, सालम्भमाचरन्तोऽधरीकुर्वन्तश्च नासमाप्य प्रारब्धं विरमन्ति । तेषां दृढसंकल्पतल्पे शयानानामेव पदपद्म-संवाहनमुपयाति साफल्यलक्ष्मीः ।

# विषमपि पीयूषे परिणमय

प्रायः सर्वोऽपि लोकः पीयूषं पिपासति, काञ्चनमन्विष्यति, उत्थानं च वाञ्छति। परं नहि समीहामात्रवशंवदानि फलानि। पीयूषपिपासुनापि कदाचन प्राप्येत प्रथमे प्रयासे विषपात्रम्, काञ्चनमन्विष्यता लभ्येत निम्नस्तरावच्छिन्ना धातवः, उत्तिष्ठासतापि कदाचनानुभूयेत पतनम्, मङ्गलानुष्ठानपरेणाप्यासाद्येत कदाचिदमङ्गलम्। किन्तु प्रथमेतरप्रयत्नेष्वपराङ्मुखा मनस्विनः कौशलेनाध्यवसायेनानिर्वेदेन च श्रियो मूलमाजिहाना विषं पीयूषे, निम्नस्तरान् धातून् काञ्चने, पतनमुत्थानेऽमङ्गलं च मङ्गले परिणमयन्ति। मृषोद्यमेतदिति नारेकणीयं कैरपि यत् प्रत्यक्षं गरलमपि पीयूषयन्ति भिषग्वराः, धातुभेदानपि काञ्चनयन्ति रासायनिकाः, पतनमप्युत्थानहेतुतां नयन्ति वैज्ञानिकाः, अमङ्गलमपि माङ्गलिकतां प्रापयन्ति मङ्गला महर्षयः। यथार्थतस्तु किं विषं किं वा पीयूषम्? किं काञ्चनं किं वा तदितरत्? किमुत्थानं किं वा पतनम्? किं मङ्गलं किं वाऽमङ्गलम्? सर्वमपीदं द्रव्यक्षेत्रकालभावाद्यपेक्षापरिकल्पितं तत्तत्संज्ञामङ्गीकुरुते। प्रयोगविदग्धो हि जनो विषमपि पीयूषयन्, लोष्ठमपि हिरण्ययन्, पतनमप्युच्छ्राययन्, मङ्गलयंश्चामङ्गल्यमात्मनोऽध्यवसायक्लृप्तामनिर्वेदवैखरीम्प्रथयति।

चन्दनमुनिः

## सकृत् पुनर्विलोकस्व

सौम्य ! बहु दृष्टवानसि बहु च द्रक्ष्यसि । परं व्याकरोमि रहस्यम् । बहुदृष्टानामपि बहु द्रष्टव्यं विद्यते, बहुश्रुतानामपि बहु श्रोतव्यमवशिष्यते, बहुगतानामपि बहु गन्तव्यं चकास्ति; बहु प्राप्तानामपि पुरु प्राप्तव्यं विराजते, बहुतिथं भूयिष्ठमधीतानामपि बह्वध्येतव्यमास्ते । अतः सखे ! सत्येदं मयेदं विज्ञाप्यते यन्नौचितीमञ्चति तवेदं व्याहरणं यन् 'मया बहु विलोकित' मिति । सकृदपि चेद् द्रक्ष्यसि सर्वङ्कषनिरीक्षितेन तर्हि ज्ञास्यसि यन्नूनमद्यापि दृष्टश्रुताधीतेषु बहु सावशेषमिति । यत एकस्मिन् वस्तुनि द्रष्टव्यानामानन्त्यमन्तर्हितं तिष्ठति यन्नैकपद एव सामान्यविहङ्गमालोचितेन साक्षात् कर्तुं पार्यते । अत एवोक्तं केनचित् सूक्तिकारेण—

'अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ।'

अम्बुधिपारदृश्वानो हि वानराः सिन्धोर्गाम्भीर्यं नाज्ञासिषुस्तत्तु मन्दराचल एवावेदीत् । तस्मादेकतानया दृशा यथा यथा द्रक्ष्यसि तथा तथा तव ज्ञानाभिमानो विगलिष्यति भविष्यति च तव दृष्टिर्दिव्यज्योतिष्मती । तस्मिन्नूतने परिप्रेक्ष्ये समुत्पत्स्यते त्वयि नवा प्रेरणा, नवीना स्फूर्तिर्नव्या मतिर्नूत्ना धृतिरभिनवा च विश्वजनीनता । तदानीं तवाहङ्कारमुकुरो भविष्यति भग्नः । तस्मिंस्त्रुटित एव स्वपरभेदभित्तिर्भिदामाप्स्यति । एकमात्मानमतिरिच्य तदा त्वं न किमप्यन्यद् द्रक्ष्यसि । अतः प्रबोधपाठं ब्रवीमि यत् सकृद्विलोकितमपि पुनर्विलोकस्व ।

## भूमा वै सुखम्, अल्पता च दुःखम्

भद्र! काल्पनिकमिदं विष्टपम्। मानसं कर्मैव संकल्प इति प्रोच्यते। तदेव वचसि विग्रहे चाकृतिमत् सम्पद्यमानं मनोवाक्कायत्रियोगनिष्ठं वरीयस्त्वमधिगच्छति। अञ्जलिपरिमाणमेव गृह्णाति मर्त्यः। न हि खर्वः प्रभवति नभः स्प्रष्टुम्, न चाल्पतोया सरित् शक्नोति वारांनिधिमाश्लेष्टुम्। अतो मा कदाचिदपि तुच्छमभद्रं वा कल्पनाकलापकेयूरं कार्षीः। शुभं सुन्दरं मङ्गलं च कल्पय। यतो हि—

'प्रोन्नतं मानसं यस्य,
भाग्यं तस्य समुच्छ्रितम्।'

इति वदन्ति नीतिविदः। वामन एव विराड् जायते। मानवस्य मानसकुण्ठैव वैकुण्ठत्वोपकण्ठने कुण्ठति। अन्यथा चुलुकित एव घटयोनिना सिन्धुर्नाभितश्च विन्ध्याचलः। छिन्नकण्ठोऽपि तमस्तुदत्येव तमोनुदम्। ततोऽपि सालसा बालिशा आत्मन आहोपुरुषिकामजानाना धूलिसात् कुर्वन्ति रत्नसंवननकुशलं जीवनाञ्जलिम्। 'हन्त! असमर्था असाधना मन्दभाग्याश्च वयम्'। 'केऽपि न सादरं शृण्वन्ति कथनमस्मदीयं न च निभालयन्ति प्रेमपूरपरिप्लुतया सौहार्ददृशाऽस्मान्। अहह! नामधेयमपि नानुयुञ्जते। परन्तु नेदृशा एवास्म वयम्। आसीदस्माकमपि समयः। अद्य तु 'ते हि नो दिवसा गता' इत्येव वक्तुमुचितम्।' इत्थं वृथा दुर्विकल्पतल्पे पार्श्वपरिवर्तनमाचरन्तोऽल्पप्राणाः शीतका दिनेऽपि दुःस्वप्नानेव विलोकन्ते स्वकल्पकार्पण्यकण्टकैरनिशं कीलिताश्च कालं क्षिण्वन्ति। किन्तु ये विपत्सु धैर्यं भयेषु द्रढिमानं दारिद्र्येऽपि दैन्यपराङ्मुखत्वमलाभेऽपि सन्तोषवृत्तिमङ्गीकुर्वते सम्पदः

सौभाग्यानि लक्ष्मीश्च तानेव स्वयमुपेत्याश्लिष्यन्ति । सन्तमसेऽपि प्रकाशं, कङ्करनिकरेऽपि शङ्करं, यवसपुञ्जेऽपि दिव्यौषधं तेऽधिगच्छन्ति । अहमहमिकयोपसीदन्तितरां सर्वा अपि सम्पदः । परितः प्रसृत्वराश्च कल्पनाः कल्पलतायमानाः परिवेष्टयन्ति तान् । उत्साहसहस्रांशुर्दीव्यति तेषाम्मुखेषु । अतोऽल्पतातरङ्गिणीं तीर्त्वा भूमासमुद्रसन्तरणसुखाय स्पृहणीयं सर्वैरपि ।

भवति यदि शीतर्त्तोः शीतः परिणामः, उष्णर्त्तोरुष्णः परिणामः, सुरभितानां पुष्पाणां सौरभ-प्रसारः, प्रदीपादिभिरन्धकारनाशः, औषधैश्च गदोपशमस्तर्हि न कथं भवेयुस्तद्रूपक्रियाकुशलः कुशलानामुपदेशाः । नूनं यद्युपदेशाः स्वतोऽननुभूताः केवलशब्दजालसंदब्धा हृदयमभिन्दानाः श्रुतिपुटादाहत्य पतिता विलीना न परिणामकारिणः स्युरिति नाश्चर्यम् । यतः कणशून्यैस्तुषैः कथं बुभुक्षोपशमः ? सलिलशून्यैः पानीयपात्रैः कथंकारं वैतृष्ण्यम् ? जीवशून्यैः कलेवरैः का क्रियोत्थितिः ? वस्तु यत्र वास्तविकमस्त्येव नहि, तत्र कौतस्कुतः परिणामः ?

## समय एव करोति बलाबलम्

'कालेन बलिरिन्द्रः कृतः कालेन व्यवरोपितः' प्रसिद्धमिद-माभाणकम्। यतः कालेन कीलितं सर्वम्। यः सुप्तेषु जागर्ति जाग्रत्सु चोच्चावचप्रेङ्खादोलाविलासमारचयति स काल एव। सृष्टेः क्षणं क्षणं काले विद्धं कालेन विद्धं वा विद्यते। सूचीविद्धा यथा सुमनसां माला तथा कालविद्धा सृष्टिः। कुशलः पुमान् स यः कालमनुकूलयन् व्यवहरति। समयो हि नैतादृशं कस्याप्यवलेपं सहते यस्तमुपेक्ष्य स्वौद्धत्येन वर्तितुं चेष्टते। कालेन सालम्भमाचरिष्णवो जगदपि तृणाय मन्यमाना बलोच्छूना अनेन भृशं पराभवं गमिताः। कर्तुमकर्तुमन्यथाकर्तुमलम्भूष्णवोऽप्यस्य पदाङ्गुष्ठेन क्षिप्ता लुप्ता अभूवन्। जगति कापीदृशी व्यक्तिर्न विलोक्यते या समयसाहसिक्यमतिरिणक्ति। प्राप्तकालं समाचरन्तो हि सुधियः साधनाकोटिकोटीरायमाणा राजन्ते। समयानुरूपं स्वकीयं शुभं जीवनं जीवन्तः साधवो रागद्वेषादिद्वन्द्ववशंवदता-मपवदन्तोऽखिन्नं तिष्ठन्ति। त एव भूस्पृशो भुवने भारभूता बोभवति ये कालानुरूपं स्वरूपं परिवर्तयितुं नेशते। अत्र समयवेत्ता हि विद्वानिति भण्यते। समयानुरोधेन कुत्रापि कथनं वरं कुत्रापि श्रवणं, कुत्रापि तूष्णीकता श्रेयसी क्वापि भाषणं श्रेयः, कदाचिद् ददानःशोभते, कदाचिद् गृह्णन्। क्वापि शिक्षणमुचितं क्वापि चाध्ययनम्। अत एव वृद्धोक्तिरियं यत् समयमनु-रुद्ध्य वर्तितव्यम्। यादृशः समयस्तादृग् व्यवहर्तव्यम्। यो हि समयभाषी तस्य गुणरहितामपि वाचं शृण्वन्ति सभ्याः। अनवसरे व्याख्यानकौशलं दर्शयंस्तु प्राज्ञोऽप्यवज्ञायते —अतो ब्रवीमि—' उक्तसूक्तदुरुक्तानां बलाबलयोः परीक्षणं समय एव करोति। कालचरुपकं हि वागन्नं चारुत्वमञ्चति, समयाञ्ज-

लिभरितं च सुभाषितं हार्दिकीमुदन्यां दूरयति । समयमुपेक्ष्य ब्रुवतो बृहस्पतेरपि वचसि न तादृग् गरिमावकाशो यादृग् वाचा शकुनसूचनं कुर्वतो द्विकस्य'।

परः सहस्रान् घटान् प्रत्यहं पूरयन्नपि कूपो नहि सगर्वमन्तः शब्दायते, नहि च स्वजलं बहिरुच्छालयति ।

परेण प्राप्तजलोऽपि घटः किञ्चिन्न्यूनः खिद्यमान इव शब्दायते पूर्णभरितश्च गर्वोन्मत्त इव बहिरुच्छलति । अहो! अयमेव महताममहतां वास्तविको भेदः ।

'अपरिमितजलसंभृत जलाशय! पायय मां पानीयं पीडितोऽहमुदन्याजन्यपीडया' उक्तमध्वनीनेन साशंसम् ।

'किञ्चिन्नम्रीभूय यथेच्छं स्वच्छं सुधासोदरं सलिलं सलीलं पिब पान्थ! परन्तु दर्पोन्नतमुखानां विनयविमुखानां नात्र पातुमधिकारः' स्फुटमुक्तं सरोवरेण ।

## उदासीना हि साधवः

'बलवती हि द्वन्द्वानां प्रवृत्ति' रित्यनुचिन्त्य जागतिकपरिणामाभिज्ञा विज्ञा साधवो द्वन्द्वैर्विमुक्ता गतशोकमोहा उदासते। निध्यायन्ति ते—

'श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः।'

इत्यनेकेषां दुःसाध्यमानसगदानामस्ति दिव्यौषधमौदासीन्यमेव। द्वन्द्वसम्परायस्थलेऽस्मिन् संसारे साधक औदासीन्यं सेवमानो हि सुखितो भवति। यदि कस्यचित् कल्याणकामनया प्रेरितः पुमान् हितावहं वक्ति, परिणामसुखमध्वानं निर्दिशति, अपथान्निवारयति, हितं परिणामसुखमपथान्निवारणं च यदि परो न प्रतिपद्यते, प्रतिकूलं च प्रत्युत्तरति तदानीं प्रायशः प्रेरको मनसि म्लायति, खिद्यते। परेषां पुरतश्चात्मप्रतिघां प्रतिपादयन्निर्वक्ति—'कीदृशोऽयमविनीत उच्छृङ्खलो विपरीतमतिश्च यो हितमपि न सहते वहते च स्वैरं विपरीते पथि।' एवं च हिताय शुभाय कल्याणाय च प्रयतमानानामपि मानसं कषायकलुषं कल्पते। अन्यदीयवृजिनवर्जनामाचरन्तश्च ते स्वयमपि परितापभारमामन्त्रयन्ते। परानुल्लाघयन्तः स्वयमामयमया जायन्ते। परेभ्यः पन्थानं दर्शयन्त आत्मनोऽपि मार्गं विस्मरन्ति। परं विवेकविप्रलब्धानामेषा विपणिः। ये तु प्रेक्षावन्तस्ते केवलं कर्तव्यधियैव निर्वहन्तः परकृतनिषेधस्वीकृत्योः प्रतिक्रियाभिर्न ग्लपयन्त्यात्मानम्। निर्मलेनाम्भःपूरप्रवाहेण समुच्छलन्ती सरित् तीरभाजाम्मन आजुहोति पयः पातुम्। परन्तु यदि न पिबेत् कश्चन पानीयं तदा तस्या मनसि न भवति खेदलवोऽपि। उदास्य मुदामधीश्वरी साऽस्खलितं प्रवहति।

एवमेव हिताहितप्रबोधपटिष्णवोऽपि सन्तः तन्निषेधेऽभ्युपगमे वा न हर्षशोकावश्नुवते । हितावहां गिरमप्रतिपित्सुनैव स्वहितं हतं न त्वेतेन हितैषिणो मनीषिणः क्षतिः कापि जातेति समीचीनं पक्षं कक्षीकृत्य मुदोदासते साधवः । स्वालाभमनालोच्य वर्तिष्णूनामेव कृते प्रोक्तं भर्तृहरिणा—'**नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।**' उलूकलोचनान्धिकया किमिति खिद्येत भानुमान् ?

जन्मनाश्लिष्टं मरणम् , मरणेनाश्लिष्टं जन्म । कियदज्ञानम् ! एकत्र हर्षः, अन्यत्र शोकः ।

विभागावच्छिन्नः संयोगः, संयोगावच्छिन्नोविभागः । न विज्ञायते, कतरस्तयोः प्रियोऽप्रियः ?

गमनस्यैव परिणाम आगमनम् । आगमनस्यैव परिणामो गमनम् । हन्त ! हन्त !! कथं धीमान् एकस्मै कस्मैचित् श्लाघते, परस्मै कस्मैचिच्छपते ?

वत वत कियद्दुसं सत्यम् !!

अविवेकि वचनमिदं यन्नसहेऽहं कस्यापि किमपि। सर्वैरपि कस्यापि किमपि सोढव्यमेवावश्यम्। बाल्ये मातापित्रोरवरोधः सहनीयः। तदनु शिक्षकस्य, पत्न्याः, भर्तुः, स्वामिनो, राज्याधिकारिणां, धर्माधिकारिणां च किमपि किमपि सहनीयम्। वार्धके पुत्रपौत्राणामपि सहनीयमेव। यदा कदाचिदागताः प्रतिकूलाः परिस्थितयोविपदोऽपि च क्षन्तव्या एव। प्रेयसा-मरुन्तुदो विप्रयोगा अपि क्षम्या एव। अन्तेऽनैच्छिकी यमयातनापि मर्षणीयैव। इतरत्र पृथिव्या भारः सहनीयः।। वायुनाप्यवरोधः सहनीयः। अग्निनाप्यत्यर्थं पारवश्यं मर्षणीयम्। वृक्षैः फलपातादि मर्षणीयम्। जलै-र्मलाविलता सोढव्या। पशुभिः पारतन्त्र्यं भारवहनं च सोढव्यम्। सूर्या-चन्द्रमोभ्यां राहूपतापः क्षन्तव्यः। धराधरैरुदरखननं क्षन्तव्यम्। धाराधरैः पवनपराधीनता क्षम्या। स्वर्णादिधातुभिस्ताप कुट्टनादिका सपत्राकृतिः सोढव्या। समुद्रैरुदरविदारितं प्लवकृतं सोढव्यम्। गगनेन धूमसंकुलता, धाराधरधावनं, नभोयानचङ्क्रमणं, गृद्ध्रचिल्लादीनां चोड्डयनचापल्यं सोढव्य-मेव। रत्नैरपि शाणोत्कषणादि, विक्रयतुलारोहणं मर्षितव्यम्। हन्त! साधुभिरपि खलादीनां दुर्वचनावलिः क्षम्यैव। अस्तु, वस्तुमात्रैर्यत्र तत्र सर्वत्र किमपि किमपि कथञ्चित् क्षन्तव्यमेव। अतो वास्तविकं जीवनानन्दं प्राप्तुं समयागतं किमपि सुखदुःखादिकं सहिष्णुतया क्षमस्व।

# ऊर्ध्वगामी भव

पान्थ! रात्रिन्दिवं पर्यटतस्ते पन्थाः कथं न पूर्णतामापत्? यत् क्षणमपि विश्रान्तिस्त्वया नाग्राहि। क्षुत्-शीत-तापादिकमपि त्वया नाऽगणि। मार्गत्यागोऽपि न व्यधायि। परं चित्रमेतावत् परिश्रम्यापि त्वया न प्रापि लक्ष्यबिन्दुः। किं नेदं खेदव्यामिश्रमाश्चर्यस्थानम्? किमत्रान्तर्हितः कोऽपि बृहद्दोषो दुःखयति त्वाम्? कच्चिदत्र विभावितं त्वया? मच्चिन्तनतस्तु तव गतौ मूलतः काचन दोषापत्तिर्विद्यते। यथा—एका कुलालचक्रवद् वृत्तगतिः, द्वितीया गगनक्षिप्तकन्दुकवदूर्ध्वगतिः। वृत्तगतौ चिररात्राय भ्रमदपि वस्तु न हि सीमानमुल्लङ्घयितुमलम्। यत्रास्ति तत्रैव पुनः पुनरागच्छति। न ऋच्छति शुम्बमात्रमपीतस्ततः। ऊर्ध्वगतौ तु प्रथमे क्षण एव नव्यदिङ्मण्डलं प्रविष्टं भवति वस्तु। प्रतिक्षणं वर्धमानं नवनवाननुभवान् सेवमानं प्राप्नोति प्रान्ते यियासितं पदम्। सिद्धिमुखमपश्यतः साधकस्यापि किं नेयमवस्था? प्रचण्डं क्रियाकाण्डमनुसरतोऽप्यनुदिनं नहि कापि नवीना दृष्टिपथमवतरतितराम-लौकिकमयूखरेखा। कथं न प्रादुर्भवति प्राणिमात्रे प्रत्यक्षमात्मीयभावना? कथं न नष्टा भवन्ति कष्टा मनोमन्दिरतः स्पष्टाः कषायाः? कथं नागम-शासनाद्भुतवैराग्योपासना विलुप्ता भवति भोगानां वासना? अत्रापीदमनुत्तर-मुत्तरं यच्चक्रभ्रामं भ्रमतितमामिदानीन्तनं साधकमण्डलम्। बाह्योपचारेणैव, कथं नष्टाः स्युरन्तरङ्गरुजः। शब्दानां विवादे मृतप्रायो दृश्यते शब्दगत आत्मा। वैराग्यपुष्टिमिषतो विधीयते स्वदृष्टिरागपुष्टिः। प्रवचनप्रभावना-व्याजतो विस्तार्यते स्ववचनप्रभावना। जनसेवामिषमादाय विरच्यते स्वोदरसेवा। इत्यस्मिन् सर्वत्र दुरभिसन्धिकीलिते व्यापारे कथं कल्याणम्?

किं वा शुभं साधीयः सम्पद्येत? अतोवच्मि, साधक! वृत्तभेदं विधाय सत्वरमूर्ध्वगामी भव।

आनुकूल्ये सुखं प्रातिकूल्ये दुःखम्। आनुकूल्ये प्रातिकूल्येपि यत्सुखं तत्कियदद्भुतम्!!

प्राप्ते हर्षः पुनरप्राप्ते शोकः। प्राप्तेऽप्राप्तेपि यदौदासीन्यं तत्कियदलौकिकम्!!

इदं तव, इदं मम। तव ममातिरिक्तं किमपि तृतीयमनिर्वचनीयं पदम्।

इदं जन्म, इदं मरणम्। जन्ममरणातिक्रान्तं नित्यं तृतीयं किमपि।

इदं नवम्, इदं जीर्णम्। नवजीर्णावस्थातिगमनवजीर्णं किमपि तृतीयं वस्तु।

इदं लघु, इदं गुरु। तद्द्वयवन्ध्यमगुरुलघुनामकं किमपि वास्तविकम्।

## प्रतिध्वनिः

क्वचित् पर्वतीये प्रदेशे, छत्राकारे मन्दिरे, कूपे वा यादृशो ध्वनिः क्रियते तादृश एव स गम्भीरीभूय पुनरायाति। किन्तु यथार्थतया अशब्दायितोऽपीदृग्ध्वनिर्निःसरति सोऽप्रचारितोऽपि शनैः शनैः स्वतो गुरूभूय जनानां कर्णजाहं स्पृशति। भद्र! अलमलं कृतेनातिकोलाहलेन स्वगौरवप्रदर्शनेन। यद्यस्ति तर्हि प्रदर्शनेन किम्? स्वयमेव द्रक्ष्यन्ति ये साक्षाः सन्ति। आमयाविनः स्वयमगदङ्कारमन्वेषयन्तो भ्रमन्ति। शुष्यदोष्ठतालवः पिपासाशान्त्यै स्वयं मधुरजलमुदपानमुपतिष्ठन्ते। न किं दरदरविन्दावलिं कासारश्रेणिं सेवन्ते मकरन्दलोलुभा द्विरेफाः। बधिरीकृतकाष्ठाकर्णपुटः केन पटहो निनादितो यदत्यन्तस्वादूनि सन्ति सहकारफलानि? साक्षात् सुधासोदर्या द्राक्षाः कदा प्रहिण्वन्ति स्वमधुरिम्णो गौरवगाथां वृत्तपत्रेषु? कोऽवरुणद्धि पथि प्रस्थितान् यत्र भक्ष्याणि कटुकानि निम्बफलानीति? किन्तु सर्वत्र पोस्फुरीति यथार्थतायाः प्रतिध्वनिः। एकोऽनुभविता पराननुभावयति, परः परान्, परेऽपि च परःशतान्, तेऽपि परोलक्षानितीत्थंकारं जायते वस्तुनो विश्वविसृत्वरा ख्यातिः। पुनश्च—"कृत्रिमतायां शब्दा ब्रुवते यथार्थतायान्तु हृदयम्। शब्दानां शक्तिः शब्दमात्रपर्यवसायिनी हार्दिकी तु हृदयग्राहिणीति"। ततः समस्मिन् व्यवहारे विचारे चाचारे यथार्थो भव, अलं परान् प्रत्याय्य, स्वप्रत्ययितो भव। निश्चप्रचमिदं यद् यथार्थस्याप्रचारितोऽशब्दायितोऽपि च ध्वनिर्विश्वं व्याप्नोति।

प्रथमे प्रहारे नहि निःसरतितरां भूमेरुदरादुदकम् । प्रथमे पाठे नहि जायेत कश्चिदाचार्यपरीक्षोत्तीर्णः । प्रथमे चरणन्यासे नहि गन्तुमलंभवति कश्चिदीप्सितं स्थलम् । प्रथमे जलसेके नहि विलसति कश्चिद् द्रुमः फलभारभ्राजिष्णुः । मित्र ! प्राथमिकाः प्रयासा विफलायासा इति मा चिन्तय । भृशमायस्यतो मे कियन्ति दिनानि व्यतीतानि ; किन्त्वद्यावधि नहि लक्ष्यते किमपि सफलताया लक्ष्मेति मा खिन्नो भूः । किन्तु प्रतिपन्नं कार्यकलापं दृढश्रद्धया परावर्तमानोऽग्रतः सर । प्राक्तनव्यानुभवानां रहस्यमन्वेषयन् तदनुसारि कार्यजातं परिष्कुर्वन् परिवर्धय । नूनमचिन्त्यः कश्चिदेकः क्षण ईदृक्षः समेष्यति यः पुराकृतान् समस्तान् प्रयासान् सद्यः साफल्ये परिणेष्यति, तदानीमुदेष्यति तव भासुरो भाग्यभानुमान् । तेन सर्वा आशा उज्ज्वलमुखा भवितारः । नूनं ते मधुरकल्पनाम्भोजकाननमुन्मिषितं भावि । सर्वमपि साहजिकं कृत्यं प्रीणयिष्यति त्वां प्रतिपलम् । तद्विपरीतं त्विदं यद् यदि किञ्चित्कृतमसफलीभूय जिहाससि किमप्यन्यदादित्ससि तत्राप्यसफलः पुनरितरत्ततोऽपि पुनरन्यदितीत्थं विहस्तमनाः सन्तमसे हीतस्ततो बम्भ्रम्यमाणो नहि क्वापि रतिं परिणामवैशद्यं वाऽऽप्स्यसि । तस्मात् स्थिरीभूयैकत्रैव पुनः पुनः प्रहर । इयमेवास्ति सफलतायास्तालिः ।

●

## वर्तमानं मोपेक्षस्व

भद्र ! व्यतीतमतीतं, नागतमनागतम्, सम्प्रति केवलं वर्तमानमेवास्ति प्रवर्तमानम् । प्रायः संसारिणो वर्तमाने प्रवर्तमाना अपि गायन्त्यतीतं, चिन्तयन्त्यनागतं, बत ! वर्तमानमुपेक्षन्ते । किन्त्वतीतगीतेनानागतचिन्तया च किं प्रत्यावलते ? एकं वर्तमानमेव कार्यक्षमम् । यदा वार्तमानिके क्षणे किमप्युचितमारचयत्यतीतकृतदोषान् परिशोधयति, अनागतं च श्रेयसे साक्षीकुरुते । यतो वर्तमानमेव द्वितीये क्षणे भूतकालतां याति, अनागतमेव क्षणान्तराले साम्प्रतिकतामवतिष्ठते । एवं च वर्तमानकालशुद्ध्या कालत्रयस्य शुद्धिर्भवति । तद्वद् वर्तमानविकृत्या कालत्रयं विकृतिमापद्यते । वर्तमानं साधयन्तो रोगिणो नीरोगताम्, मन्दा मनीषिताम्, अकिञ्चना आढ्यताम्, पापीयांसोऽपि साधकतां पुण्यवत्तां चाराधयन्ति । किन्तु वर्तमानं त एव साधयितुं क्षमन्ते य उत्साहशीला उद्यमिनः स्युः । ये प्रातरेवाद्यतने दिवसे किं किं निश्चितं करणीयमिति साधु स्थिरीकुर्वन्ति । तदनुरूपं समयमनतिवाहयन्तस्तानि तानि कार्याणि सेवन्ते । प्रतिपन्नानि कार्याणि च साधुतया सम्पाद्यैव विरमन्ति । अतोऽप्रमत्तीभूय मौक्तिकराशिवद् ये वार्तमानिकक्षणान् सुरक्षन्ति ते सर्वत्र सर्वतः सुरक्षिता इहामुत्र पूर्णसुखशालिनः स्युः ।

## पूर्वं जानीहि, पश्चादाचर

केवलं गमनेनैव नहि गम्यपदप्राप्तिः। केवलं वचनेनैव नहि वक्तृत्व-कला। केवलं तारविरसनेनैव नहि स्वरसाधना। केवलं मृदङ्गकुट्टनेनैव, नहि वाद्यकौशलम्। केवलं भक्षणेनैव नहि पुनरारोग्यलाभः। किन्तु केन, कथं, क्व, कदा, कियत्प्रभृति भावानां तत्रावश्यकी योजना। अन्यथा तान्यसफलान्यसुन्दराणि कष्टदायीनि भविष्यन्तीत्यसंशयम्। कार्यं भूरि-परिश्रमतः कृत्वापि प्रान्ते बालाः सीदन्ति, ये तन्मर्माविज्ञायैव सहसा कार्यं प्रविशन्ति। अविचारिकार्यकरणान्नहि करणं नास्त्यश्रेयस्करम्। अविज्ञात फलभक्षणान्न भक्षणं किं न चारु? अत एव स्पष्टं घोषयति सर्वजगज्जन्तु-कल्याणी महावीरस्य वाणी—"**प्रथमं ज्ञानं ततो दया**"। गीतापि गायतितमां ज्ञानगौरवम्, "**नहि ज्ञानेन सदृशं, पवित्रमिह विद्यते**" इति। गाढान्धकारे गच्छतां कुत्र स्खलनं, पतनं, केनचित् स्तम्भेन शङ्कुना वाऽऽहननं भवेदिति को निश्चिनोति। ततो दीपकतुल्यं प्रकाशकरं ज्ञानमिति मत्वा पूर्वं जानीहि, पश्चादाचर।

चन्दनमुनिः

## प्रेम

परमं संवननं, वशीकरणं, सम्मोहनं यद्यस्ति संसारे किमपि तत् प्रेमैव। मनुष्याः पशवः पक्षिणोऽपि आकृष्टा भवन्ति प्रेमवशंवदाः। तत्र वशीकारः क्रियते नहि, किन्तु जायते स्वत एव। किन्तु तत्प्रेम्णा शुद्धेन भाव्यं न च स्वार्थकाममोहाद्याश्लिष्टेन। प्रेम तु तदेव किन्तु विषमिश्रितक्षीरवत्तद् हेयतां याति। शुद्धे प्रेम्णि तु स्वार्थकाममोहादीनां छायापि न सुसहा। तत्र तु परिपूर्णाऽऽत्मीयता साकारा सुजाघटीति। शुद्धप्रेमपरिप्लुतानां सर्वपापोपशामि मनो नित्यमनामयकल्पनां समस्मै जगते कुरुते। मधुसंकाशा तेषामवञ्चकभाषा सर्वत्र शिक्षादीक्षादानप्रवणा। प्रत्येकं तेषां कार्यमार्यजनोचितं किमपि नवोत्कर्षदर्शनप्रसितम्। किमप्यद्भुतशान्तिदायी तेषां सम्पर्कः। कोऽप्यलौकिको हृदयग्राही तेषामुपदेशः। ते यत्र-यत्र व्रजन्ति तत्र-तत्र प्रेम प्रेम प्रेम एव परितः पोस्फुरितं भवति। प्रेममयानि तेषामक्षीणि यत्र-यत्र निपतन्ति तत्र-तत्र किमपि नूत्नं वातावरणं जागरूकतां याति। भ्रातः! विस्मर सर्वामपि बहुविस्तरां शास्त्रीयवार्ताम्, केवलमेकं स्वगुणपटिष्ठं निर्मलं प्रेम स्वीकुरु। हृदयं शपथीकृत्याहं कथयामि, नूनं तव सिद्धिर्भवित्री नारेकणीयं किमपि।

## परिश्राम्य

परिश्रमप्राप्तं जलमप्यमृतायमानम् । परिश्रमस्वेदबिन्दुसिक्ता रूक्षापि रोटिका घृतवरमतिरिणक्ति । कृतभूरिपरिश्रमा प्राप्ताऽकोमलतल्पापि प्रमीला काप्यलौकिकी । अमुधा क्षुधापि परिश्रमिणां कापि मधुरतमा । लब्धवियोगा रोगा अपि तत्र निर्वासितप्रायाः । अत्यल्पास्तेषां परिश्रान्ते मस्तके विकल्पाः । सखे ! अलसीभूयाऽऽसिका नहि सौभाग्याङ्गमङ्गति । किमपि करणाय करौ चरणाय च चरणौ लब्धौ । यदि न तयोः कोऽप्युपयोगस्तर्हि तौ तूर्णं जडिमानमाप्स्यतः । वस्तु तदैव वस्तुतामश्नुते यदर्थकारित्वमर्हति । तदितरत्कथनं वस्तुतामुदास्ते । अस्तु, श्रमणपरम्परायां तु "श्राम्यतीति श्रमण" इत्यन्वर्थं नाम । तेन तु तपश्चर्यया उत स्वसाधुत्वयोग्यक्रियया परिश्रमितव्यमेव । परिश्रमपराः स्वावलम्बिनो नितान्तसुखिताः स्युः । कठिनेऽपि काले स्वकरपरिश्रमलब्धगौरवा न जातुचिदवसीदन्ति । प्रोत्फुल्लवदनारविन्दास्ते नवनवोल्लासान् विकासान् साधयन्तः सदैव मुदिताः स्युः; अतो यथावसरं परिश्राम्य ।

## वाङ्माधुर्यम्

किमतिमधुरं किमतिमधुरमित्युपस्थिते प्रश्ने केनापि प्रत्युत्पन्नमतिनाऽति-सुन्दरमुत्तरमदायि यद् वागेव माधुर्यधुर्यतामेतीति । दधिमधुद्राक्षाशर्करादीनाम्मा-धुर्यतोऽपि वाङ्माधुर्यं सर्वातिशायीत्यत्र नारेकः । दधिमधुद्राक्षादिभोजनं साक्षा-दमृतायमानमपि वाङ्माधुर्यविरहितं हालाहलतामेति । अहो! विलक्षणः कोऽपि वाङ्माधुर्यमहिमा । ज्वलनवज्ज्वाज्वल्यमाने जटिले संघर्षे सुधासोदर्य-मेकमेव मधुरं वचनं पद्मसरोवरसलिलशीतलतां नयति तत्कालमेव । पुनश्च, द्रविणदारिद्र्यतोऽपि वचनदारिद्र्यम्महाकष्टदम् । उक्तमेकेन विज्ञमहोदयेन व्यङ्ग्योक्त्या "**वचने किं दरिद्रता**" । अरे! द्रव्यदारिद्र्यं तु दुर्दैव-वशादागतं नहि तत् सद्यो निष्कासयितुं शक्यम् । किन्तु वचनदारिद्र्यं तु स्वयमाकृष्यानीतं दुःखाकरोति द्रव्यदारिद्र्यतोऽप्यधिकतरम् । भद्र! सावधानीभूय वाङ्मणीनामुपयोगं कुरु । नहि यत्र तत्र निक्षेप्या भवन्ति मणयः । तेषां तु यत्रात्यधिकमूल्यमवाप्नोति मतिमान् तत्रैव प्रयुङ्क्ते, अतो निष्प्रपञ्चीभूय वाङ्मधुरो भव । सर्वत्रापि माधुर्यं विकीर्णं भावि ते सन्निधौ । अहह! कीदृक्षं आत्मनीनं वाङ्माधुर्यम् !!

## उपर्युपरि पश्य

यत्र यत्र जायते तेऽवलिप्तं मनस्तत्र तत्रोपर्युपरि पश्य। यद्यस्ति ते स्वस्थं सुन्दरं वपुस्तर्हि पश्य त्वत्तोऽपि अतिसुन्दरतरान् हृष्टतरान् पुष्टतरान् पञ्चजनान्। यद्यर्पयति त्वां दर्पं किमपि विशिष्टं वैदुष्यं तर्हि पश्य त्वत्तोऽप्यतिप्रतिभान् साक्षात् सरस्वतीपुत्रानिव अनेकान् पण्डितप्रकाण्डान्। यद्यर्दयति त्वामनभिभवो विभवमदस्तर्हि विलोक्यालौकिकान् धनकुबेरान् एकाह्निकाऽऽयतस्त्वां पराभवतः परःशतान्। पुनर्यदि जागर्ति ते हृदये सर्वैः सम्माननीयोऽहमिति विडम्बना तर्हि महायशस्विनां दर्शनार्थं प्रतीक्षितजनमण्डलीनाम् महामनसामुपरि दृक्पातं विधेहि। आर्य! अस्मिन् विचित्रे विलक्षणे जगति कुत्रापि नास्ति गर्वावकाशः। एकैकतो विशिष्टा अत्रानेके पतिताः सन्ति, तस्मादुपरि उपरि पश्य। येन तवाभिमानो गलिष्यति भविष्यति च तव कम्रं नम्रं वर्तनम्। सर्वेऽप्यमी मदीया भ्रातरो मत्तुल्या एव सन्तीति महती भावना जागरूकतां प्राप्स्यति।

चित्रम्! सारल्यं सरलमपि नोरीकर्तुं सरलम्। कौटिल्यं कुटिलमपि स्वीकर्तुं सरलम्।

* * *

न तज् ज्ञानमज्ञानमतिरिणक्ति यन्नार्हति तद्रूपां क्रियाम्।

## अधोऽधः पश्य

यदा तदा रोगदारिद्र्यवियोगादिक्लेशैर्भवेच्चे क्लिष्टं मनस्तदा तदा अधोऽधः पश्यतस्तेऽत्यल्पीयसी मदीयार्तिरित्यनुभविष्यति तावकं चेतः। यदा त्वं केनचिद् रोगेण पीडितः खिन्नो भवसि तदानीमेतादृशं स्वत उत्थान-शयनाऽक्षमं दयनीयदशं कञ्चन रोगिणं स्मृतिमानयेस्तत्काल एव त्वं स्वपीडां विस्मृत्य स्वस्थो भविष्यसि। यथोक्तमेकेन **शेखसादी** नाम्ना यवनमहा-पण्डितेन—" अनुपानत्कः कुत्राप्येकदाहं गच्छन्नासम्। सङ्कोचमञ्चतिस्म मदीयं चेतो यथोपानद्वर्जितौ मे चरणाविति। मस्जिदोपकण्ठमेकं छिन्नचरण-युगलं मर्त्यं निभाल्याहं "खुदाबन्दस्य" परमां कृपामस्मार्षम्। हन्त! अहं तु लब्धाक्षतचरणयुगलोऽत्यन्तं भाग्यवानस्मि अपेक्षयाऽस्य छिन्नचरण युगलस्येति"।

एवं यदा त्वं परमप्रियेभ्यः पुत्रादिभ्यो विमुक्तो भवसि तदानीं त्वं व्यापन्नसप्ताष्टपुत्रां काञ्चन महादुःखितां मातरं स्मर, तव दुःखं स्वतोऽल्पीयस्तां गमिष्यति। एवं विभवाभिभवमाप्तोऽपि जीर्णमलिनवाससं मार्गशायिनं प्रतिवेश्म भिक्षामटन्तं कञ्चन रङ्कमानवं प्रत्यक्षय, सत्वर महमल्पधनोऽस्मीति भिदेलिमा ते खेदरेखा लुप्तप्राया भाविनी। इत्थंकारं विपदि त्वं स्वस्थता-मानेतुं अधोऽधः पश्य।

त एव वृद्धत्वं प्राप्नुवन्ति ये कायकल्पं कर्तुं न जानन्ति । कायकल्पं च त एव कर्तुं क्षमन्ते ये मूलं सुरक्ष्य जीर्णशीर्णोपाङ्गानि सुखं हातुकामा भवन्ति । ये यद् गृहीतं तावदेव रक्षितव्यं न नव्यं सामयिकं किमपि गृहीतव्यं न च रूढिगतमनुपयोगि किमपि पुराणं हातव्यमिति मन्यन्ते त एव व्यतीते समये वृद्धत्वं सेवन्ते । 'साम्प्रतं वयमनुपयोगिन' इति मन्वाना उदासते, प्रान्ते मरणमेव तेषां शरणं नान्या गतिः कापि । तेनैव कारणेन वृक्षाः शतानि-सहस्राणि च वर्षाणि जीवितुमलम्, यत्ते प्रतिदिवसं, प्रतिऋतु, प्रतिसम्वत्सरं च किमपि त्यक्तुं आदातुं च चेष्टन्ते । अहो! अतिवृद्धकायेऽपि सहकारे किमुनायान्ति पत्राणि, पुष्पाणि, फलानि? किमु स न छायादानयोग्यः? किमु स-नोद्यानशोभां वर्धिष्णुः? कथं मनुष्यो हताशो भूत्वा तिष्ठति? कथं न काय-कल्पं कर्तुं चेष्टते? अतः प्रिय! त्वमपि सर्वाणि चिन्तनद्वाराणि नित्य-मुद्घाटितानि रक्ष । आयान्तु तेभ्यः सर्वदिग्विभागतो जवनाः शीतोष्णाः पवनाः । सहिष्णूभूय तान् सहस्व । पर्यालोचय च कतमः पवनप्रवाहः मेऽनुकूलः, कतमः प्रतिकूलः? अनुकूलमनुकूलयित्वा तल्लाभं गृहाण । प्रतिकूलोऽपि कथमानुकूल्यं भजतीति विमर्शयन् किमपि नव्यमाविष्कुर्वन् नित्यं नवीनो भव ।

# अनुसन्धत्स्व

सत्वरमितस्ततो भ्रमन्तीं पिपीलिकां पृष्टवानहम्—"भगिनि पिपीलिके! क्व यासि"?

तयोक्तम्—"धान्यकणानन्वेष्टुं व्रजामि"?

मया पृष्टम्—"किं धान्यकणानां संकेतो लब्धस्त्वया कुतश्चित्?"

तयोक्तम्—"नहि, किन्त्वन्वेष्टुं प्रयते, आशासेऽवश्यं सफला भविष्यामीति"।

विस्मयस्मेराननस्तत्रैव स्थित्वा यावत् किञ्चिद् विचारयामि तावत् सा मुखात्तधान्यकणा प्रत्यावलमाना मत्सम्मुखमागता। सविस्मयं मयाऽप्रच्छि—"किमस्ति ते मुखे गृहीतम्"?

तयोक्तम्—"धान्यकणः"।

मयोक्तम्—"बत! बत! प्राप्तस्त्वया"?

तयोक्तम्—अनुसन्धानात् किमप्राप्यमिहास्ति"?

उत्साहमयं नव्यं नीतिवाक्यं श्रुत्वा जातोऽहमुन्मनाः। बन्धो! नास्तीति निश्चित्य मा हस्तोपरि हस्तं निक्षिप्य तिष्ठ। पुनः पुनरनुसन्धत्स्व। अप्राप्यं किमपि नास्ति नित्यमनुसंदधतस्ते।

## गृहीतान्येव दुःखानि

सुखासनासीनः कश्चिद् रमते, क्रीडति, विविधान् विनोदान् विदधद् हसति पुनः। तदानीमेव पत्रप्रेषकेणैकेन पत्रं निक्षिप्तम्। स्वनामाङ्कितं मत्वा झगिति तदुद्घाटितम्। वाचनेन बाष्प्ययानस्याऽऽकस्मिकघटनायां कश्चित् स्वकीयः परमस्नेही मृत्युं प्राप्त इत्यवगतम्। हास्यं, रमणं, क्रीडनं च तत्कालमेव विलुप्तम्। संजातं च बाष्पपूर्णं लोचनयुगलम्, वृद्धिमाप्ता हृद्गतिः, वैवर्ण्यं व्याप्तं वदने। हा! हा! धिग्-धिग्! मन्दभाग्योऽस्मीति परिदेवितुं लग्नः।

चिन्त्यमत्र—"कुतः समागतं दुःखम्? किं हृदयमन्दिरत उत परतः? परतोऽपि किं गृहीतं दुःखं जातमुताग्रहीतम्?" स्पष्टमुत्तरम्-गृहीतमेव।

द्वौ मनुष्यौ समीपे शयानौ स्तः। केनचित् क्रुधान्धलेनागत्य भृशं गालिदानात् तौ भर्त्सितौ, आक्रुष्टौ, गर्दभश्वानाद्युपमया सगर्हमुपमितौ च। जातजागरेणैकेन सर्वं श्रुतम्। परेण गाढनिद्रावशंवदेन नावसितं किमपि।

विम्रष्टव्यम्—क्रुधाऽरुणः को भावी? किं जागरूक उत निद्रालुः? स्पष्टं प्रतिवचः—जागरूक एव। किं कारणमत्र—ग्रहणमेव।

पथि पादन्यासं कुर्वन्ती काचिद् यौवनभरनिर्भरा सुरूपा युवतिः कस्यचित् कामुकस्य, अपरस्य योगिनश्च दृष्टिपथमागता। कामुकेन कीदृशी रमणीति कृत्वा विकृतं व्यधायि स्वं चेतः। परेण योगिना तु केवलमीर्यामाचरता किमपि ध्यानं न दत्तम्।

विचार्यम् —विकृतिकारणं वस्तु अथवा तद्ग्रहणम्? स्पष्टं ग्रहणमेव। अत आत्मसरसि निमज्जता ज्ञानिना कदापि परवस्तुग्रहणं न कर्त्तव्यम्। केवलं द्रष्टाहमिति साक्षिमात्रं स्वं मन्यमानेन स्वपथे सञ्चरितव्यम्। न दुःखानि कुत्रापि, सर्वत्र स्वसहजजन्यानि सुखानि सुखान्येव।

अलं नग्नाटानां वस्त्रोपदेशेन, वावदूकानां मौनोपदेशेन, कलहप्रियाणां प्रेमोपदेशेन, लोभाकुलानामाकिञ्चिन्योपदेशेन च। खलु धारयन्तु वस्त्राणि स्वयं, स्वतो नग्ना बहु मंस्यन्ते वस्त्रमाहात्म्यम्। पूर्वं स्वीकुर्वन्तु मौनव्रतं स्वतो वाचाटा लप्स्यन्ते तुष्णीभावम्। सन्तु प्रथमं सर्वतः प्रेमपरिप्लुताः, स्वतः कलहिनः कलहविकला भाविनः। भवन्तुतरां स्वतौ निष्परिग्रहाः स्वतो लोभाविष्टा लोभकष्टान्यनुभविष्यन्ति। यतः करणमेवोपदेशः।

## क्षमा

क्षमा शस्त्रं करे यस्य, दुर्जनः किं करिष्यति ?
अतृणे पतितो वह्निः, स्वयमेवोपशाम्यति ॥

—सुभाषितम्

भो ! भो ! भव्या ! किमुत भीमे भवाऽरण्ये भ्रमथ ? किमुनाङ्गीकुरुथ भगवदुपदिष्टं पौरस्त्यं क्षमाधर्मम् । क्रोधान्धलः कश्चिच्चेदुच्छालयेत्कुवाक्य-कर्दमम्, प्रक्षिपेच्च कटुकर्कशशब्दोपलान्, किन्तु क्षमी नहि तत्सादृश्य-मनुतिष्ठेत्, प्रत्युत तदुपशमाय प्रयतेत । खलु कुत्राऽपि प्रसृमरवन्हिज्वालाजाल-स्याऽभिवर्धने का विशेषता ? तदुपशमे त्वस्त्येव विशेषता कापि । ईक्षतामव्य-क्षमेव यत् क्षमाभृतः कियतीं दीर्घकालिकीं स्थितिमश्नुवते, धराधरादिसुन्दर-नामधेयैर्ध्वन्यन्ते सुधीभिः, नहि केऽपि जवनपवनास्तान् कम्पयितुं प्रभवन्ति, अनेकानि भीषणगदहारिण्यौषधानि तत्र उत्पद्यन्ते, बहूनि स्रोतांसि च ततः स्रोतस्विनीं पूरयन्ति, हरितभरिता तत्रत्या वृक्षावलिः प्रीणाति ग्रैष्म तापतप्तान् पान्थान्, कोकिलानां कुहुकारावै स्तत्स्थलं परं रामणीयकमाविर्भा-वयति । अस्तु, क्षान्तिः शूरैरेवाश्रयणीया, नहि गाम्भीर्यशून्यैः कातरैर्नरैः । अत एवास्ति कथितम् "क्षमाशूरा अर्हन्तः" अहो नहि ज्ञाने, तपसि, सत्ये, सन्तोषे च तीर्थभृतां शूरत्वमाविष्कृतं, किन्तु क्षमायामेव तेषां शौर्य-माविर्भावितम् । अस्येदमैदम्पर्यम्—यदन्यानि सद्गुणशतानि सुलभानि, किन्तु क्षमा तु महतामेव धनम् । महतामेव भूषणम् ।

क्षमया नहि केवलं स्वयं सुखमनुभवति । किन्तु क्षमितुः सङ्गेन सर्वेऽपि तत्पारिपार्श्विकाः सुखमासादयन्ति, समेऽपि तं स्निह्यन्ति, प्रेमप्रवणया दृशा च विलोकन्ते ।

क्षमिता पुनः प्रफुल्लान्तःकरणोऽनवरतमुल्लाघतां द्राघयति, तस्य भुक्तमन्नं पीतं पेयादिकं च पुष्टिमादधाति, तस्यौजस्विनी चाकृतिः सर्वेषां मनो मोहयति । क्रोधान्धास्तु स्वयं दन्दह्यमाना परानपि दाहयन्ति, स्वयं शुष्यन्त परानपि शोषयन्ति, स्वयं तातप्यमाना परानपि च तापयन्ति । इत्थं परम-मात्मनीनं क्षमाधर्ममाकलय्य ये क्षमां रक्षेयुस्ते जगद्रक्षाक्षमाः प्रतिपदं सुखिनो भवेयुः ।

करोतीति न बहु मन्तव्यम् । कथं, कदा, कीदृक्, किं करोतीति प्रेक्षणीयं विज्ञैः ।

* * *

गतमिति न शोच्यम् किन्त्वागतं गतमिव निरर्थकं न स्यादिति पर्यालोच्यं जागरूकैः ।

लोभश्चेदति पापकर्मजनको यद्यस्ति किं पातकैः ?

—भर्तृहरिः ।

आकर्ण्यते सूक्तिरियं विदुषां वदनारविन्देभ्यो यद् "निःस्पृहस्य तृणं जगत्"। अहह! निःस्पृहता कियदानन्दमयी कियत्सौख्यभरनिभृता कियच्छान्तिदात्रीति नहि विवेचितुं शक्यते। संसारे यानि कष्टानि विस्फूर्जन्ति तानि सर्वाणि हि वाञ्छावितान्येव वेदितव्यानि। वस्तुतः काङ्क्षाजन्यमेव कृच्छ्रमखिलमिदम्। निरीहाणां तु सकलमेव भूतलं हिरण्ययम्, सकलापि संपच्चरणारविन्दयुगलं चुम्बति तेषाम्, अखिलापि विभूतिः स्वयम्वरा तानेवोपतिष्ठते, समस्तमपि साम्राज्यं तेषां करायत्तं च विलसति। उक्तमेकेन विद्वांवरेण—

सर्वत्र संपदस्तस्य, सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य, सर्वा चर्मावृतैव भूः ॥

निर्लोभो हि यदाप्नोति तेनैव सन्तुष्यति नाधिकमभिलषति, विचारयति च—किं बहुना! जीवननिर्वाहस्त्वनेनैव सुखं भविष्यति, बहु प्राप्यापि नहि स्वर्णरत्नादिकं भुज्यते, नहि धनाढ्याः कायसमुच्छ्रायादऽधिकविशालानाशाप्रदेशानवरुध्य स्वपन्ति, प्रत्युत लोभाकुला नहि सुखमऽशनायितुं क्षमन्ते, नहि च निःशङ्कं निद्रायितुम्, किन्तु प्रतिपलं सन्दिहानाः "हा हा! तत्र किं जातम्? हन्त! अस्मिन् वाणिज्ये भावमान्द्यमागतम्, तत्र कर्मकरा नहि कार्यसौष्ठवमापादयन्ति" इतीव बहु वितर्कयन्तः क्लिश्यन्ति, भूरिचिन्तासन्तानवितानैकतानास्ते वपुषः पाटवमपि नाश्रयन्ते।

पुनः निःस्पृहस्य हृदयमतीव द्रढिमानमाद्रियते । सत्यं हितमुदीरयन् नहि मघवानमप्याशङ्कते सः । दम्भस्तु तस्य सामीप्यमेव नाप्नोति । समुज्ज्वलाऽपक्षपातिनी तद्वाग्धोरिणी पापीयसामपि हृदयं परिवर्तयितुं शक्नोति । अस्तु, इतरद् बाह्यक्रियाकलापं गौणीकृत्य मुमुक्षुजनैः प्रथमं मुक्तिरेवाऽभ्यसनीया, सिद्धायां लोभमुक्तौ मुक्तिस्तु करक्रीडस्था झगित्येव भवित्री, इतरथाऽऽशा-परवशानां नहि जातुचिदेव क्लेशह्रासः संभवी । पल्लवितमिदमेवैकेन कवितल्लजेन—

आशाया ये दासास्तेदासाः सर्वलोकस्य ।
आशा दासी येषां, तेषां दासायते लोकः ॥

अस्ति सममेवाज्ञप्राज्ञयोर्बहुमानदानम्, केवलमिदमेव भिद्यते यदज्ञः स्वं बहु मन्यते, विज्ञश्च परान् ।

* * *

अभिमानिविज्ञतः श्रेयानज्ञोऽनभिमानी । किमु निर्केवलजलं न परत्वं प्राप्नुयाद् विषमिश्रितपयसः ?

# आर्जवम्

सन्धयेत्सरला सूचिर्वक्रा च्छेदाय कर्त्तरी ।
अतो विमुच्य वक्रत्वं, गुणानेव समाश्रय ॥

—सुभाषितम्

ऋजोर्भाव आर्जवमर्थात्सारल्यम्, आत्मनीनं वस्तु वर्वर्ति । जैनागमेन खल्वार्जवस्य त्रैविध्यमाविर्भावितम्, यथा—कायार्जवम्, भाषार्जवम्, भावार्जवं च। नहि केवलं भाषार्जवेन समुपार्जितं भवत्यार्जवम्,किन्तु इतराभ्यामुभाभ्यामप्यवश्यमेव भवितव्यम् । त्रिष्वपि भावार्जवं वैशिष्ट्यमाबिभर्ति। भावार्जवमन्तरेण केवलं कायभाषार्जवे दम्भतरुपल्लवनेऽम्भस्त्वमङ्गीकुर्वाते "विषकुम्भं पयोमुख" मित्युक्तिमेव चरितार्थतां नयेते, तद् द्वयमप्यवद्यपदवीं चाधिरोहतः, अतस्त्रयाणां पूर्णरूपेण सहावस्थानमेवार्जवमविष्कुर्वन्ति जैनागमाः । अहो! सारल्यस्याङ्गीकरणं सरलं नास्ति । नहि सारल्यं सर्वेषां वाचोयुक्तिं प्रयुनक्ति, नहि च सारल्यं समेषां हृत्कमलमलंकरोति, किन्तु अवदाताशयानां निष्कपटाचरणानां विमलव्यवहाराणां द्वेषेर्ष्यापरिवर्जितानां चैव सामीप्यमासेवते । विलोक्यताम्—सारल्ये कीदृग् संवननशक्तिः प्रस्फुटति । अहह! सारल्यविलसितं अस्पृष्टकपटकालुष्यं अविज्ञातवञ्चनाप्रपञ्चं नैसर्गिकवर्णोच्चारणप्रवणं पुनर्मधुरहास्यप्रस्फुटिताधरमाधुर्यं मुग्धशिशोर्मुखं न कस्य हृदयमाकर्षति? न कस्य करौ तं समीपयितुं तमालिङ्गितुं च प्रलम्बायमानौ जायेते? न कस्यचेतस्तदस्फुटां वाणीमाकर्णयितुं ताम्यति? किं कारणमत्रास्तीति विचारितमायुष्मता? नून मत्रास्ति सारल्यमेवाद्वितीयं निबन्धनम् । माया केनौपयिकेन

विजेतव्येति पृच्छापरवशे शिष्ये गुरुणोक्तम्— "मायं चञ्जवभावेण" मायामार्जवभावेन विजयस्व। बत! बत! यत्रार्जवसाम्राज्यं विलसति तत्र मायापिशाची पदमप्याधातुं नार्हति। पुनः सरला हि वृक्षा कार्ययोग्या जायेरन्, सरलस्तम्भानामुपर्येवाभ्रंलिहानि हर्म्याणि स्थास्नुतामश्नुवते, सरलं काव्यं सुगमं मनोहरं च भवति, सरलो हि पन्थाः पान्थैः स्वीक्रियते। किं बहुना, सर्वेष्वपि कार्येषु सरलत्वमेवानुसंदधाति मानवी प्रकृतिः।

ज्ञानेन शोभते श्रद्धा, श्रद्धया च शोभते ज्ञानम्। उभाभ्यां शोभतेतमामाचारः।

* * *

स्वपेक्षया सुन्दरं वास्तविकं सुन्दरम्। परापेक्षया त्वसुदरं सुन्दरं पुनः सुन्दरमसुन्दरम्, यतः परे बाह्यं विलोकन्ते स्वश्चान्तः। परेऽनुमानतोऽङ्कयन्ते परं, किन्तु, स्वः स्वं प्रत्यक्षतः।

# मार्दवम्

नमन्ति फलिता वृक्षा, नमन्ति विबुधा नराः ।

—सुभाषितम्

मृदोर्भावो मार्दवं—कोमलत्वं निरभिमानित्वमितिभावः। जगति प्रायेण मनुष्याः किमप्यासाद्य किमपि संपाद्य चाभिमन्यन्ते, यथा—वयमेव धनाढ्याः, वयमेव शासकाः, वयमेव तपस्विनः, वयमेव विद्वांसः, वयमेव कवयः, वयमेव च वक्तारः। वस्तुतः असम्पूर्णानामप्राप्तवस्तुतत्त्वानामेवाऽहङ्कारः स्वकीयं तुच्छतालास्यं दर्शयति, परन्तु नहि परिपूर्णानां हृदयङ्गमीकृतशास्त्र-हार्द्दानां प्रथितसौहार्द्दानां मनो मलिनयति। शोश्रूयते जनश्रुतिरपीयम्- "सम्पूर्णकुम्भो न करोति शब्दं - अर्धो घटो घोषमुपैति नूनम्"। हन्त! अस्मिन्निन्द्रजालोपमे संसारे कस्य वस्तुनो दर्पश्चारुत्वमञ्चति, यद् कियज्जीवनम्? कियत्प्रभुत्वम्? कियान् विभवः? कियती विद्या? ओः! अगाधाम्भसः समुद्रस्यैकं बिन्दुमात्रमम्भश्चञ्चुपुटेन निपीय कश्चिचाटकैरश्चिन्तयेचेद्—"अहह! पीतो मया पारावारः" अलम्, तदवलेपः ऋते व्यामोहान्नहि किमप्यर्थमादधीत। तादृश्येव स्थितिरहङ्कृतानां नराणां मन्तव्या। यथा यथा मनुष्याणां ज्ञानगम्भीर्यमेधते तथा तथा मार्दवमपि स्पर्धयेव वर्धते। ते तु वमविशेषज्ञं मंमन्यमानाः, पदे पदे नैर्जीं क्षतिमीक्षमाणाः तत्पूर्त्तिं च कर्तुमुद्यम्यमाना निर्भरं नम्रा जायेरन्। आर्हतानां तु विनयमूलमेव धर्मं ववर्ति। विनय-पटिष्ठानामेव शास्त्राधिकारः सम्भोभवीति। विधेयानामेवात्मसिद्धिः सुजाघटीति। विनीतानामुपर्येवाऽऽचार्यः कृपां चर्करीति। तेषामेव च पावनं हृद् विविधविशिष्ट

बोधदानैर्बिभर्ति । व्यवहारेऽपि मार्दवं कियन्मनोहारि ? विषममामनितमपि कृत्यं मार्दवेन सिद्ध्यति क्षणेन । प्राचीनान्यपि वैरप्राचीराणि मार्दवसम्पन्नानां पुरतो भूमिसाद्भवन्ति । मार्दवगुणेन चण्डप्रकृतयोऽपि जलवच्छीतलाः संपद्यन्ते । मृदून्येव कुसुमानि चेतोहराणि । मृदून्येव फलानि च परिपक्वानि । अन्यथा-कृतमपि नम्रं नहि तुट्येत् पुनस्तादवस्थ्यमाप्नुयात् । जरठं तु वालितं हि द्विधा भवेत् नहि पुनर्मूलदशामापद्येत । वेत्रवतीनिदर्शनमत्र विलोकनीयं व्युत्पन्नैः, मार्दवं चोरीकरणीयमह्नाय ।

तत्रस्थादेव पूत्कुर्वतः पुंसस्तत्प्रतीकारमन्वेष्टुकामः पदमप्य-ग्रे सरन् परो वरीयान् ।

* * *

विचारात्प्रचारो भिद्यते, प्रचाराच्चाचारो भिद्यते नित्य-मसताम् । सतां तु विचारानुरूप आचारः, आचारानुरूपश्च-प्रचारः ।

यस्य यावान् परपरिग्रह - विविधममतावीवधः ।
जलधिविनिहितपोतयुक्त्या—पतति तावदसावधः ॥

—शान्तसुधारसे

लघोर्भावो लाघवम्, अयमत्राभिप्रायः—आत्मा यावान् लघुर्भवेत् तावान्नेवोर्ध्वगतिः स्यात् यावांश्च कर्मपुद्गलैर्गुरुत्वमायायात् तावान् ह्यधोधो व्रजेत्, अत एव धर्मभेदे पञ्चमं लाघवनामकं धर्मभेदमाख्यातवानधीश्वरः। जनाः! सर्वेऽपि यूयं गौरवमीहध्वे, प्रतिपलं गौरवार्थं भृशं चेष्टध्वे, परन्तु यावल्लाघवं न स्वीकरिष्यध्वे तावन्न गौरवं लप्स्यध्वे। उन्नतिस्तु लाघवे स्वभावसिद्धा हि चकास्ति। नावलोकि किमुत तुलायां लाघवयुक्तं पल्लकं स्वयमेवोद्गच्छति, भूरिभाराक्रान्तं तु तत्कालमेव न्यग्भवति। पुनर्लघूभूतं काष्ठं तरतितरां त्वरितं जले, गुरुत्वगर्वितमयः पयसि सहसैव निमज्जति। लाघवगुणान्वितो ह्याशुगः कियत्स्वातन्त्र्यमनुभवन् सुखं विहरति, कापि शक्तिस्तं निरोद्धुं, नार्हति। साधूनां कृतेऽपि "लहूभूयविहारिणं" इत्यागमे प्रकटितम्, अस्तु, लाघवं श्रेयोऽर्थिभिः सततं श्रयणीयमेव। तल्लाघवं द्विविधम्—बाह्यमाभ्यन्तरं च। बाह्योपधीनां यन्नैयुन्यं भोगोपभोगासामग्रीषु च यथाशक्ति सङ्कोचनं तदेव बाह्यलाघवमुदीरयन्ति महर्षयः। यच्च क्रोधादिकषायाणां मिथ्यात्वाद्यभ्यन्तरग्रन्थीनां तुच्छत्वाऽऽपादनं, दृढबन्धनबद्धानां तत्कर्मप्रकृतीनां :शैथिल्यदशाप्रापणं, दीर्घकालभोग्यानामल्पसमयभोग्यत्वाविर्भावनं, तीव्ररसानां मन्दरसत्वानयनमेव चाभ्यन्तरं लाघवं श्लाघन्ते महान्तः।

बाह्यलाघवं तु साधनमात्रम्, साध्यं त्वाभ्यन्तरलाघवमेव। सिद्धिमवतीर्णे ह्याभ्यन्तरे लाघवे बाह्यं तु सिद्धमेव विद्धि। अज्ञात्मन्! अनाद्यनन्ते संसार-चक्रवाले चक्रभ्रामं भ्रमता, विविधजनिजरामरणाद्युपद्रवशतैर्घोरार्तिमनुभवता चतुरशीतिलक्षजीवयोनिषु शैलूषवन्नानारूपमाबिभ्रता, भूरिपाषण्डिवचनाऽना-यनियन्त्रितान्तःकरणेन विविधान्तःशून्यबाह्यानुष्ठानमनुतिष्ठता त्वया लाघव-धर्ममन्तरङ्गवृत्त्या नाधारि, तदद्यावधि व्यामूढतया संसारे पर्यटसि, इतरथा नहि पर्यटनावकाशः संभवेत्। भोः साम्प्रतमेव वास्तविकं लाघवमङ्गीकुरु, नूनं तव तादात्विकी मुक्तिर्भवित्री, नात्र विचिकित्स्यं किमपि।

भद्र! परकृतया स्वप्रशंसया त्वं प्रसीदसि चेत्, परन्तु स्वकीयं दौर्बल्यं स्वतश्छन्नं नास्ति तर्हि तदाश्रित्य किं न खिद्यसे?

* * *

क्रोधो नान्तः सुन्दरो न बहिः। सर्वथाऽसुन्दरमतो नाद्रियन्ते तं महात्मानः।

## " सर्वं सत्ये प्रतिष्ठितम् "

सत्यं हि ध्रुवं, शाश्वतं, सनातनं, सारभूतं च वेविद्यते वसुधातले। सद्भ्यो हितं सत्यमित्यन्वर्थं नामधेयमादधत् चराचरं व्याप्यावतिष्ठते। सत्यशून्यं तु किमपि वस्तु नहि वास्तवमास्तिघ्नुते। सत्यं हि तत्वं, सत्य हि तथ्यं, सत्यं हि स्वरूपं, सत्यमन्तरेण निखिलमेव गगनेन्दीवरायते, शशशृङ्गायते, वन्ध्यास्तनन्धयायते वा। यद् यस्य वास्तविकं रूपं तदेव सत्य, तद् विपरीतमेवाऽसत्यम्। औष्ण्यवर्जितो वह्निः केन वह्निरित्यभिधीयते? किन्तु भस्मेदमिति निगद्यते। व्यपनीतनवनीतं हि दधि नहि दधिवाच्यत्वमर्हति, किन्तु तक्रमित्यभिधया व्याहरन्ति लौकिकाः। सत्यं केनापि निगडितं नास्ति, सत्यं केनापि च रुद्धं नास्ति। नहि सत्यं कमप्येकमेव प्रीणाति, स्निह्यति, सनाथयते च। सत्ये सर्वेषां तुल्योऽधिकारः, सत्यं सर्वेषां कृते राजपथः, कश्चिदप्यधिकर्त्तुमनुसर्त्तुमिच्छेच्चेद्। अहह! सत्यामृतं यैः पीतं तएवाऽमरत्वमगमन्। सत्या सत्यस्य सेवा यैः साधितास्तएव जगत्सेव्या अजनिषत। सत्ये ये विश्वसन्तो जगत्सुखं तृणाय मन्यमानाः सर्वं तत्यजुस्त एवाऽतुच्छमनिर्वचनीयमानन्दमाभेजुः। जनाः! करण - योग - भावपुरस्सरं सत्यं रक्षन्तु-तमां युष्माकं रक्षा स्वयमेव भवित्री। न श्रुतं किमुत सत्ये द्रढिमानं द्रागयन्ती सीता जाज्वल्यमाने ज्वलनकुण्डे सोत्फालमापतिता, कैस्तत्र सम्भावितं यदत्र ज्वलदनलं सलिलत्वमाप्स्यतीति। अहो! सत्ये अमोघाशक्तिः परिस्फुरति। सत्यं सर्वत्रापि स्पष्टघटनामभिलषति। कथं नाभिलषेत्तत्र तिरोभावनयोग्यं

किमप्यस्त्येव नहि। हन्त! असत्ये तु पदे-पदे भयं, चिन्ता, क्षणिकत्व-मप्रत्ययश्च विजृम्भते। यद् विधीयते तत्र चेतोऽपि न भवेत्प्रतिभु, किमन्येन मिथ्यासत्यङ्कारेण? भव्याः! प्रत्यक्षे किं प्रमाणं मार्गयथ, हृत् साक्ष्यं साधुतया ददाति तथापि सत्ये भयमनुभवथ, किं न विचित्रमिदम्? परन्तु नाद्यावधि युष्माभिः सत्यामृतं पीतम्, लब्धास्वादास्तु तत् कदापि नहि त्यक्ष्यथेति मे दृढो विश्वासः।

धावमानेषु स्वाभाविकीं गतिमापन्ना वरिष्ठा अग्रेसराश्च। यतो धावमानाः खिन्नाः सन्तः सत्वरं विश्रान्तिमीहन्ते, किन्तु स्वभावगतयस्त्वविश्राम्यन्तः सोत्साहमग्रतो व्रजन्ति स्वीकृते वर्त्मनि। इदं तु ततो भिद्यते यत् केषाञ्चन स्वाभाविकीं गति-मनुसरन्तः परे धावन्तितमाम्। अतः सर्वमपि स्व-स्वगतिसापेक्षं धावनमधावनमपि चेह।

येन येन इह आस्रवरोधः सम्भवेन्नियतमौपयिकेन ।
आद्रियस्व विनयोद्यतचेतास्तत्तदान्तरदृशा परिभाव्य ॥

—शान्तसुधारसे

श्रेष्ठतमं सप्तमं संयमनामकं धर्ममभाणि स्वयम्भुवा । संयमनं — संयमः इन्द्रियाणां मनसश्च पापकर्मभ्यो निवर्त्तनमात्ममन्दिरे नियन्त्रणं वा । जैनागमैः सप्तदश स्थानेषु संयमः कार्यइति सप्तदशप्रकारः संयमः प्रत्यपादि । संयमे-यादृशी सुखोपलब्धिस्तादृशी नह्यसंयमजीवने । संयमेन जीवनमतीव सुन्दरं नियमितं च भवति । आकाशवद् विशाला तृष्णा तत्र सन्दानिता जायते । चिन्ताचमूरी नहि जातुचिदपि तं चञ्चमीति । सन्तोषमय्या निद्रया च निद्राति सुखं सः । सुजनाः ! अपरिग्रहवादोऽपि संयमजीविनामेव सम्भवी । हन्त ! चेदद्यतने काले संयमितं सर्वेषां जीवनं स्यात् तर्हि महर्घ्यतावल्ली कथमपि न पल्लविता जायते, बुभुक्षा — राक्षसी स्वयमेव नष्टा स्यात्, स्थाने - स्थाने नरीनृत्यमाना दुर्घटना — नटी नहि स्वीयनाट्यपाटवं प्रकटयितुं प्रभवेत्, दन्दह्यमानो वैरदावानलश्च लघूपशाम्येत् । वास्तविकं स्वातन्त्र्यं तु संयमिन एवानुभवन्ति ; यथा—एकस्तु तैलयानमारुह्य कुत्रापि जिगमिषति, इतरो निजाभ्यां पादाभ्याम्, जल्पन्तु तयोः कः स्वाधीनः कश्च पराधीनः ? पुनरेको नानामहामूल्यभूषणैर्भूषिताङ्गयष्टिररण्यानीमुल्लङ्घयति, परः केवलमुत्पलमाल्यधारी, विचारयन्तु कतरस्तत्र निर्भयः कतरश्च सभीः ? कतरः सोपाधिः कतरश्च निरुपाधिः ? कतरः सुखं शयितुं शक्यते कतरश्च निद्रा-

दरिद्रः ? हन्त ! अज्ञानिनो भौतिकतत्वेषु सुखमनुसंदधति, नहि - नहि, सुखं तु संयमिनामन्तःकरणादनवरतं क्षरति । अस्ति चेदनुत्तरसुखाभिलाषस्तर्हि संयमकल्पतरुच्छायामाश्रयथ, नह्यन्यत्र कुत्रापि सुखलेशः सम्भवी, घटतेऽत्र काव्यमेतत् —

यत्रास्माकं ममता, मम तापस्तत्र तत्रैव ।
यत्रैवाहमुदासे, तत्र मुदाऽऽसे स्वभावसन्तुष्टः ॥

प्रेरयितुं स एवार्हो यस्तत्कार्यं सहजतया कर्तुमलम् ।

* * *

परिपक्वाभ्यासानां तत्तत्कार्याणि साहजिकानि भवन्ति ।

* * *

रजतमेवाऽऽव्रजति कषपाषाणं न पित्तलम् । वस्तुतः कषोत्तीर्णमेव स्वर्णं स्वर्णतां श्रयति ।

यथा सुवर्णस्य शुचि स्वरूपं, दीप्तः कृशानुः प्रकटीकरोति ।
तथात्मनः कर्मरजो निहत्य, ज्योतिस्तपस्तद् विशदीकरोति ॥

—शान्तसुधारसे

सर्वेष्वपि प्राचीनभारतीयशास्त्रेषु तपोमहिमा वर्णितोऽस्ति । सर्वैरपि प्राचीनदर्शनप्रणेतृभिश्चिराय तीव्रं तपस्तप्तम् । महर्षयस्तु "तपोधना" इत्याख्यया हि सम्बोधिताः सन्ति सिद्धान्ते । तपस्यां विना कापि शक्तिरात्मनि नहि जागरूका स्यात् । तपस्यया हीदृग् दार्ढ्यमात्मनि जरीजृम्भितं जायेत यत्कयाप्युल्वणकृच्छ्रपरम्परया नहीषदप्येजिता भवेदेकापि रोमराजिस्तपस्विनः । अननुभूततपोमार्गा मानवाः स्वल्पमपि बुभुक्षापिपासादिकष्टमाकलय्य शीघ्रमेवावधीरितधैर्या विषीदन्ति "हा ! वयं किं कुर्मः, क्व यामः" इति विलपन्तः क्लैब्यमुररीकुर्वते, किं कर्त्तव्यमूढा जीवन्तोऽपिमृतप्रायाः संवर्त्तन्ते च । चीर्णतपश्चर्यास्तु कामपि महतीमर्तिमाप्यापि प्रसीदन्ति परामृशन्ति च— "अहो ! अयं समयः समागतोऽस्मत्परीक्षायाः । खलु कृतपरिश्रमाः विद्यार्थिनः परीक्षासमये हृष्येयुरथवा खिद्येरन् ? खेदस्तु तेषामेव परीक्षाकाले स्फुटीभवेत् यैर्नहि पठने साधु प्रयतितम्, तदूहृदयं हृदयङ्गमीकर्त्तुं नहि पूर्णमायस्तम्, तत्पाठस्य परावर्त्तनवेलायां निद्रा द्राघिता, तत्तत्स्थलानां कण्ठीकरणे च मान्द्यमाचरितम् । अस्तु, वयमस्यां परीक्षायामुत्तीर्णा बोभूयमाना जगतां पुरतो निर्मलमादर्शमुपढौकिष्यामहे । प्राणानपि चेन्मोक्ष्यामहे तथापि न भयं, अवश्यत्यक्तव्यप्राणानां बलिदानैः सुचिरस्थायि आत्मनीनं कृत्यं क्रेष्यामहे,

जनानां मार्गनिर्देष्टृभावं च लप्स्यामहे। तत्तपो बाह्याभ्यन्तरभेदैर्द्वादशविधं व्यावर्णितं जिनैः। यदनशनोनोदरतादिकं बाह्यम्, प्रायश्चित्तवैयावृत्यादिकमाभ्यन्तरं षट् षड्विधम्। एतेषां विशकलय्य वर्णनमौपपातिकादिराद्धान्तवर्णितं स्वयमवसेयम्, नास्मिंल्लघीयसि निबन्धे प्रपञ्चितम्, किन्तु केवलं बाह्यतपसा वपुर्जर्जरीकरणेनापि नात्मसिद्धिर्यावन्न स्वीकार्यं स्यादाभ्यन्तरं तपः। आन्तरतपोऽनुतिष्ठतस्तु स्वयमेव बाह्यं सेत्स्यत्येव नात्र सन्देहः। तपस्विभिः कास्काः सिद्धयो लब्धयश्चानायासं प्राप्यन्ते किं किमलौकिकं कृत्यं तैः कर्तुं प्रभूयते इति त्वागमे पातञ्जलयोगसूत्रे च बहु लिखितमस्त्येव।

पृष्टं केनापि—"किमन्तरं भावनावासनयोः"?

विवेचकेनाऽवाचि—"प्रयत्नजन्या भावना तथा संस्कारजन्या वासना। भूरिशो भाविता भावना वासनात्वमश्नुते। पश्चादभावितापि सा तत्तद्वस्तुदर्शनमात्रतो निरङ्कुशं सावकाशा भवति। केवलमौदासीन्यबलेनैव सा साधकेन समूलकाषं कषणीया।

अवश्यं यातारश्चिरतरमुषित्वापि विषया,
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः,
स्वयं त्यक्ता ह्येते शिवसुखमनन्तं विदधति ॥

—भर्तृहरिः

त्यक्तव्यं तु सर्वैरपि सर्वं नात्र कस्यापि विमतिः, परन्तु तत् त्यजनं नहि त्यागशब्देन व्याहर्तुं शक्यते । तत्रास्माकं कस्त्यागस्तत्र तु समयेन वयं त्यक्ताः प्रसह्य । त्यागी तु राद्धान्ते स एव घोषितो यो लब्धान्, प्रियान्, स्वाधीनान्, भोगांश्चविपृष्ठीकुर्यात्, सम्मुखमागतानपि प्रजह्यात्, स्वमाद्रियमाणानपि च न गृह्णीयात् । उक्तमप्यस्ति, यथा—"इच्छा निरोहो य सुहोइस्स" सुखोचितस्येच्छानिरोधो हि महत्वमालिङ्गति । दुःखदावदन्दह्यमानानां त्विच्छा निरुद्धैव स्वयमभावतः । आः! त्यागः कदर्याणां कार्यं नास्ति, त्यागस्तु दानशौण्डीराणाम्, झगिति तएव त्यक्तुं शक्ष्यन्ति ये त्यागमाहात्म्यं प्राज्ञासिषुः, तत्परिणामं चान्वभूवन्, त्यागं विना किमपि साफल्यं न सम्भवीति च चारुतया निरणैषुः । यथा—त्यागं कृत्वैव पलाशिनः पुष्यन्ति, फलन्ति च । त्यागमाहात्म्येनैव पयोदा उच्चैस्थानमासादयन्ति । त्यागानुग्रहेणैव सुमनसः सुमनसां चरणारविन्दानि चुम्बन्ति । त्यागतल्लीनतया हि तैलं सलिलमस्तकस्थायिकामर्हति । त्यागे महद् बलं विलसति, त्यागस्य परितोऽनेकशो विभूतयो बम्भ्रमति । त्यागस्य पुरस्ताद् सफलता स्वयं प्राञ्जलि-

-रुपतिष्ठते, त्यागिनं च स्वयमेव सिद्धयो वृण्वन्ति । हन्त! कियद् वर्णयामि यैस्त्यक्तं तैरेव प्राप्तम् । त्यागिनामेव हृदयेऽनासक्तिरन्वेषिता मेलिष्यति नान्यत्र कुत्रापि । सत्यं स्पष्टमुच्चारयितुं शक्यन्ते त्यागिनो हि नापरे, आदेयं वाक्यं तेषामेव भवितृ नेतरेषां स्वयमनाचरताम् । कापथगामिनोऽध्वनीनास्तेषां सकाशादेव सत्पथमाप्तुमर्हन्ति ; नहि केवलं गलगर्जनमादधताम् । हहा ! अद्यतने समये नाम्ना त्यागिनस्तु परोलक्षाः साधवः सन्ति, किन्तु वास्तववृत्या कियन्तः सन्तः सन्तीत्यत्र केवलिन एव प्रमाणम् । धन्यास्ते ऋषभमहावीरादयो ये पूर्णकल्याणकामनया स्वयं त्यागमार्गमङ्गीकृत्य जनानुपदिदिशुः, अनेकांश्च भव्य पुरुषान् भवार्णवात्तारयामासुः ।

गम्यपदप्रापिका लघुरपि पदां श्रेणिः शुभोदर्का ।
गम्यपदाऽप्रापकं परः सहस्रपदक्षुण्णमपि वर्त्म न हितावहम् ।

* * *

भावानामयमेव स्वभावो यत्ते भाविता वर्धन्ते, पुनरभाविता म्लायन्ति ; अतो विभावानामभावनमेव तदधरीकरणं कृते भावितात्मनाम् ।

"तवेसु वा उत्तम बंभचेरं"

—सूत्रकृताङ्गे

दशमं ब्रह्मचर्यनामकं सर्वधर्मशेखरायमाणम्, सर्वतन्त्रस्वतन्त्रम्, सर्वैरपि गुणिगणैरङ्गीकरणीयम्, सर्वैरपि साधनोन्मुखैः साधनीयम्, सर्वैरपि कीर्त्तिकान्ताकामुकैः कमनीयम्, सर्वैरपि भवार्णवं तितीर्षुभिश्च भजनीयं महाव्रतमिदम्। खलु येन ब्रह्मव्रतं साधितं सर्वं साधु साधितं तेन। येन ब्रह्मव्रतमखण्डमाराधितं तेन सुष्ठु सर्वमाराधितम्। येन ब्रह्मव्रतमक्षतं पारं प्रापितं तेन कृत्स्नमपि च क्रियाकाण्डं सम्यक् पारं प्रापितम्। हन्त! हन्त! ब्रह्मचर्यं साधयितुं बलियांसोऽपि निर्बला भवन्ति, धीरधौरेया अपि धैर्यं विधुरयन्ति, शूरा अपि कातरत्वमाबिभ्रति, अवधूता अपि विधूता जायन्ते, पण्डिता अपि खण्डिताः भवन्ति, विदग्धा अपि च संदिग्धतां सृजन्ति। नात्राल्पसत्वानामधिकारः। प्रकटितमेकेन विपश्चित्कोटिकोटीरायमाणेन कविना—

शक्यं ब्रह्मव्रतं घोरं, शूरैश्च न तु कातरैः।
करिपर्याणमुद्वोढुं, करिभिः न तु रासभैः॥

अहह! कियत् सम्यगुदीरितम्? अथवा विलोकितं किं किल केनापि भूरिभ्रमणभासुरीकृताऽनुभवेन भद्रेण कुटीरशिरसि सप्तभौमिकमभ्रंलिह प्रासादम्? विलोकिता किमुत केनापि पल्वलजलेऽनुत्तरो रत्नानां राशिः? बत! बत! दुर्दमोऽयमिन्द्रियग्रामः, दुर्निग्रहमिदं चपलाचमत्कारवच्चपलचपलं मनः, दुर्निरोधोऽयं त्रिलोकीं व्याकुलयंश्च मान्मथो वेगः। अहह! कियद्विलक्षणा

जैनेश्वरी वाणी यद् दशलक्षयोद्घृणां विजये न तादृग् गौरवं यादृग् एकस्यात्मनो विजये। अहो एकस्य जये पञ्चानां जयः, पञ्चानां जये दशानां, ततः सर्वत्र विजयध्वनिर्ध्वनितः स्यात्। श्रीमद्वर्धमानेन विभुनाऽस्य व्रतस्य रक्षायै नव वाटिकाः दशमं दुर्गं च दर्शितम्। स्यात्र कथम्? यन्महार्घ्यमाणिक्यवज्रकादेरक्षणार्थं कियन्तः प्रयत्ना विधीयन्ते, कियन्तः प्रहरिणो विकोशखङ्गहस्ताश्च स्थाप्यन्ते। अस्मिन् व्रते प्राथमिकी मानसी शुद्धिरेव मुख्यत्वमादधाति, तस्यां शुद्धावेवास्य पालनं सुन्दरं सम्भवि। विकृते मनसि वाचिकी कायिकी प्रवृत्तिश्च क्षणादेव कालुष्यमुद्भावयेत्, अतो ये मानसिकं वाचिकं कायिकं च ब्रह्मचर्यं सुदृढं पालयेयुस्त एव धन्या मान्याः पूज्याः प्रतीक्ष्या दर्शनीयाः श्लाघनीयाश्च स्युः।

अनुभविनामुपदेशाः सुभुक्तमधुरभोजनानां जीर्णोद्गाराः।

* * *

अननुभविनां प्रलापास्तु क्षुत्क्षामक्षीणकुक्षीणां कुपितवातपित्तोत्थोपिता हल्लाला वमथुविकारा वा।

## "समयं गोयम ! मा पमायए"

—उत्तराध्ययने

समयो महद् धनं निर्धनिकानाम्, समयः परमं मित्रमसहचराणाम्, समयः सुसहायो निःसहायानाम्। समयं सत्कुर्वन्तो जना जनैः सत्क्रियन्ते, समयं सफलयन्तो नूनं साफल्यं लभन्ते, किन्तु समयज्ञा नराः अल्पीयांस एव। हन्त ! बंहीयांसो मूर्खा व्यर्थकलापया पाशकतासादिक्रीडयाऽमूल्यं समयं गमयन्ति। कतिचन परपैशुन्यमयैर्मुधाप्रलापैः स्ववसरं व्यत्ययन्ति। कतिपये नाटकचलचित्रादिप्रेक्षणतत्परा द्रव्यनिद्रासद्भावनाशैरपि वेलामवहेलयन्ति। अपरे दुर्भावभृतानि श्रृङ्गाररसपूर्णानि 'रेडियो' गीतानि श्रृण्वन्तः वारमतिवाहयन्ति। परे विविधकौतुकवितताि दम्भमार्गदर्शकानि मूर्ख्युपन्यासपुस्तकानि वाचयन्तः कालं यापयन्ति। इतरे वितथराजदेशकथाप्रथितानि समाचारपत्राणि सध्यानमालोकमाना धनं समयं चाक्षिपन्ति। परन्तु न ते विदन्तीदम्—यत्समयोऽनया मुधापद्धत्या नातिवाहनीयः। गतः क्षणो लक्षद्रव्येणापि न पुनरावर्तितुं शक्यः। गतं दिनं गतगतमेव, तस्य पुनराप्तिर्मरीचिकाम्भःस्नातजनदर्शननिदर्शनं दर्शयति। जनाः ! नदीप्रवाह इव समयस्तु क्षणमपि नहि विश्राम्यति कथं विश्रान्ता यूयम्? धावनस्य समये कथं मन्थरता स्वीकृता युष्माभिः? कियत्कालं यावत्स्थायिकाऽत्र भवित्री? कर्त्तव्यं यदस्ति तत्कथं न सपद्येव निर्मीयते 'कल्ये करिष्याम' इति कृत्वा कथमग्रतोऽपसारणं तस्य? अहो ! को जानीते कल्ये कीदृग् भानुरुदेष्यति, का नव्या

घटनानटी किं प्रत्यग्रं नाट्यपाटवं प्रकटयिष्यति ? के निश्चिन्वन्ति प्रत्यूषे वयमत्र मेलिष्यामो न वा ? खलु अविस्रब्धे विश्वासः कथं सावकाशः स्यात् ? 'अनिश्चितगतेरभ्रपटलस्येयती स्थायिका' इति केन निर्णेतुं पार्यते ? अहो ! निरुद्धायमार्गस्य भाण्डागारस्य प्रचुरप्रात्यहिकव्यये न रिक्तत्वमिति मे नोररीकरोत्युरः । मित्राणि ! कुर्वन्तु झगित्येव कार्यमार्यम्, प्रतीक्षां कुर्वतो भवतोऽवसरस्तु न प्रतीक्षिष्यते चेति निश्चितो मे सिद्धान्तः ।

नहि सकृद् भावनया भावितं वस्तु तद्भावितं भवति, किन्तु वारवारमनेकशः तत्तद्भावनाभिर्भावितं तद्भावितं भवति वस्तु । किं न वैद्याः शतधा, सहस्रधा, दशसहस्रधा, लक्षधा, च तत्तद्भावनाभिर्भावयन्त्यौषधानि ?

अहो ! सामान्यमपि भैषजं तत्तदनुकूलभावनाभिर्भावितं सद् महार्थ्यमञ्चति शक्तिचमत्कारमापनीपद्यते च ।

आत्मपक्षेपि तद्वद् भावनीयं भव्यैः ।

उपकर्त्तुं प्रियं वक्तुं, कर्त्तुं स्नेहमकृत्रिमम् ।
सज्जनानां स्वभावोऽयं, केनेन्दुः शिशरीकृतः ॥
— सुभाषिते

नहि पुष्पाणि कानपि पान्थानाजुह्वति, किन्तु तेषां प्रोत्फुल्लता सौरभप्रदता च स्वयमेव तानाकर्षति । ललितलावण्यलीलाविलसितं लीलावतीनां वपुर्नहि कानपि मोहयितुमभिलषति, किन्तु तद् विलोक्य यूनां मनः स्वयमेव तत्र धावति । तथैव येषां मनुष्याणां स्वभावः सरलः कोमलः प्रसन्नतापरः सम्पर्कप्रवणः स्यात् तान् सर्वेऽपि स्निह्येयुः, तैः सह मैत्रीमासूत्रयेयुः, बन्धुभावं चाऽऽबध्नीयुः । नहि कोऽपि कस्मै किमपि ददाति, नहि च कोऽपि कस्यापि दत्तं स्वाभिमानी स्वीकरोति, किन्तु स्वभावसौष्ठवेन बहु कार्यं संपद्यते । लक्षमूल्येन यदशक्यं विभाति तदेव सुप्रवृत्तेः पुरुषस्य सकाशादनायासं सिद्धं भवति । स्वभावसौन्दर्यभाजो मनस्विनस्तु अपरिचितानप्यागन्तुकान् सम्मन्यन्ते, तुच्छैः सार्धमपि प्रेमप्रवणया वाचा ब्रुवते, वराकानपि यथोचितसाहाय्यदानेन सत्कुर्वते, कुत्रापि जल्पन्तो नहि स्वौद्धत्यमाविर्भावयन्ते, नम्रतया सर्वत्रैव नितरां प्रवर्त्तन्ते, निष्कामभावनया यस्य कस्यापि कार्यं विदधति, कृतमपि कार्यं कृतमिति नहि कदापि निजाननेन ज्ञापयन्ते च । हन्त ! जगति भारभूताः किं ते मनुष्याः सन्ति; ये किञ्चित्स्ववैपरीत्यमालोक्यैव क्रोधाऽऽध्माता जायन्ते, उच्छलन्ति, गर्हितमालपन्ति, मर्मस्पर्शिन्या भाषया जल्पन्ति च । कस्याप्युन्नतिमाकलय्यैवात्यन्तमसूयन्ति द्रुह्यन्ति च तस्मै ।

कस्यापि कार्यं भ्रंशयितुमतितरां चेष्टन्ते । परापवादव्यसनमन्वहं पुष्णन्ति च । अहो ईदृक्षाणां तुच्छप्रकृतीनां स्वकीया अपि परकीयाः सम्पद्यन्ते, प्रातिवेश्मिका अपि शात्रवतया प्रत्यवतिष्ठन्ते, पुत्रपौत्रा अपि च दवीयस्तामीहन्ते । भोः ! भोः ! अभिलषितं चेदस्ति भवतां महत्वम्, वल्लभं चेदस्ति सम्मानम्, तर्हि स्वभावसौष्ठवं भजन्तु, उदरा वृत्तिराचरणीया, हृदयविशालता दर्शनीया, परगौरवे प्रीतिरुद्भावनीया परगुणे श्लाघ्यभावना च रक्षणीया ; ततो विलोकनीयं कियन्तो भावका न स्युः ? कियन्तः श्रैमत्कं सम्मानं च न कुर्युः ? उक्तमेकेन कविना—

अयं निजः परो वेति, गणना लघुचेतसाम् ।
उदारचरितानां तु, वसुधैव कुटुम्बकम् ॥

केवलमादातुमिच्छति नेच्छति दातुं सोऽधमः ।
दातुमादातुं चेच्छति स मध्यमः ।
केवलं दातुमेवेच्छति नेच्छतितरामादातुं स उत्तमः ।

* * *

त एवाऽकुतोभया येभ्यो न केषामपि भयम् ।

स्वल्पानामपि वस्तूनां, संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥

—सुभाषितम्

बहूनां संभूयैकीभवनमेवैकताया तात्पर्यम् । बहूनां सम्मेलनेन काचिद् अद्भुता नवीनैका शक्तिरुत्पद्यते इति तु प्रकटमेव दरीदृश्यते । एकस्तु एक एव, यदा द्वौ सम्मिलितौ स्यातां तदानीमेकादशसंख्या प्रस्फुटिता स्यात् । एकेन यत्कार्यं दुष्करं प्रतीयेत, तदेव बहुभिरनायासं सम्पादितुं शक्येत । एकं सूत्रं त्वेकवार्षिको बालकोऽपि लीलयैव त्रोटयितुं शक्नुयात्, तदेव सूत्रं बहुभिः स्वसदृशैः सूत्रैः गुम्फितं सत् नहि बलीयसापि यूना द्विधा कर्तुं पार्येत तदवलम्ब्य कश्चित् पिचण्डिलोऽपि शैलाली वंशाग्रं चटितुं च क्षमेत । पुनर्य-देकेन बिन्दुना कस्यापि पिपासा नहि शाम्येत् त एव बहुसम्भूता ग्रीष्मर्त्तु-तापतातप्यमानं जीवलोकं तर्पयितुं क्षमेरन् । अहो ! एकत्वे बलं विजृम्भते, एकत्वे महत्वा परिस्फुरति, एकत्वे नीतिर्नृत्यति, एकत्वे निर्भीकता जागर्ति, एकत्वे दौर्बल्यं च क्षीयते । एकत्वमवलोक्य प्रत्यर्थिनोऽपि शङ्कन्ते, ऐक्य-धर्मावलम्बिभिः सर्वेऽपि सन्धातुमुशन्ति, तैः सह विरोधं भयावहं च मन्वते । किन्तु ऐक्यं तदानीमेव सम्भाव्यं स्यात् यदा समेपि कमप्येकं मुख्यं स्त्रीकुर्वीरन्, तदिङ्गितेनैव सर्वकार्यं निर्मिमीरन्, तदाज्ञापिते कार्ये नहि किमपि तर्केरन्, नैजं स्वार्थं संपूर्णतया च त्यजेयुः । यत्र समस्ता अपि मुख्यत्वं गर्धन्ते, अहंपूर्विकया स्वं बहु मन्यन्ते, आहोपुरुषिकयाऽपरं न्यक्कर्तुं प्रयतन्ते, परेषां

गुणानपि दुर्गुणायन्ते, स्वकीयान् दुर्गुणानपि च गुणायन्ते; नहि तत्रैक्यं स्वप्नेऽपि संभावनीयम्। हन्त! भिन्नाः किमपि कर्तुं नहि साधु पारयेयुः, नहि भिन्नाः कुत्रापि साफल्यमाप्नुयुः, नहि भिन्नाः कुहापि कीर्तिं च वृणीयुः। खलु भिन्नानां भेदे को विलम्बः? भिन्नास्तु ते स्वयं सन्त्येव। नहि विलोकिता किमुत भिन्नकलशस्य दयनीया दशा? नहि बुद्धं किं किल विभीषणाद् विभिन्नस्य लङ्केशस्य क्लेशपारम्पर्यम्? भिन्नानां संपत् परैर्भुज्यते, भिन्नानां वैभवं स्वयं भिदुरत्वमेति, भिन्नानां च सुकृतं सहसैव विलीयते। नात्र किमपि चित्रणीयम्--किञ्च यत्र क्रोधद्रोहदम्भमानादिदुर्गुणानां निवासस्तत्र कथंकारं सुखं पदमाधास्यति? किमिव तत्र शान्तिश्चिरं वत्स्यति? कथमिव नहि तत्र पुण्यं-पुण्यं समाप्स्यति? अस्तु, निष्कर्षोऽयमेव यत्रैक्यं तत्रैव सुखं,-शान्तिः, धर्मो-नीतिर्वृद्धिरौन्नत्यं च विलसति विलसिष्यति च नात्राऽऽरेकणीयं किमपि।

अग्नेरुष्णता स्वाभाविकी, सलिले तु सा वैभाविकी। यद्यग्ने-रुष्णता नष्टा ध्रुवमग्निरनग्नित्वमापद्यते।

सलिले तु तस्या नाशो न नष्टं किमपि, प्रत्युत रुचिरभावमापद्यतेऽम्भः।

## "परोपकाराय सतां विभूतयः"

परोपकारप्रवणाः प्रायः स्तोका एवमानवा भूतलं पुनते, ये स्वार्थं गौणीकृत्य परार्थसाधनायैव भृशमुत्कण्ठयन्ति। अहो! स्वोदरम्भरयस्तु पशवः पक्षिणोऽपि च सन्ति, तत्र किं नव्यम्? नव्यं तु किमपि परेषां कृते निष्पादनम्। तत्र परोपकारो द्वैविध्यमावहति—लौकिको लोकोत्तरश्च। लौकिकस्तु यदसहायानां रुग्णानां, बधिराणां, खञ्जानां, कुण्टानां, दौर्भिक्ष्य-परिपीडितानां, सलिलानलाद्युपप्लवपरिप्लुतानां, राजविरोधाद्युत्पातजातजनपद-परिवर्त्तनानां, भीषणविपद्विषधरीविषविस्मृतचैतन्यानां च नराणां कृते धनधान्य-वस्त्रवासादिसाहाय्यदानम्, सार्वजनिकपुस्तकालयौषधालय–विद्यालय–गोशाला–प्रभृतिषु यथाशक्ति साहायताकरणं च लौकिकोपकारो भण्यते, लौकिकोपकृतेः प्रधानहेतुत्वात् प्रवृत्तिप्रधानत्वाद् यशःसम्पादकत्वाच्च।

लोकोत्तरस्तु अनाद्यनन्त–संसारचक्रवाले बम्भ्रम्यमाणानां, जन्म–जरामरणरोगवियोगसंयोगादिदावे दन्दह्यमानानां, हिंसानृतस्तेयाऽब्रह्मचर्यपरि-ग्रहादिमहाजगरैर्जेगिल्यमानानां, द्यूतमांससुरापानादिसप्तकुव्यसनाऽगाधगर्त्ते पतयालूनां, नह्यस्ति किमपि पुण्यपापस्वर्गनरकादीतिजल्पाकानां च मनुष्याणां बोधार्थं स्वानुशीलितविशिष्टपद्धत्या परमकारुणिकवृत्या च धर्मोपदेशदानं, हिंसादिपापेभ्यो निवारणं, दुर्व्यसनादीनां साक्षादनिष्टं फलं निदर्श्य तत्परित्याजनं, पुनः प्रत्यक्षं पुण्यपापादीनां वैषम्यं प्रकटीकृत्य श्रद्धालुता–निष्पादनं हि लोकोत्तरोपकारः कथ्यते, एष एवात्मनीनत्वात्, हृदयपरिवर्तनक्षमत्वात्, परम-

कल्याणकारित्वात्प्रेत्य भवानुयायित्वाच्चात्यन्तिकोपकारः प्राऽरूपि विदुषां वरेण्यैः। केवलं लौकिकोपकारमेव विशिष्य पारमार्थिकं गौणीकुर्वाणा नहि संसृतौ शान्तिं स्थापयितुमलंभविष्णवः। तद्वत् केवलं पारमार्थिकमर्थयन्तो व्यावहारिकं समूलमुन्मूलयन्तो हि नहि लौकिकप्रतिष्ठापङ्क्तिमतल्लिकात्वं श्रयन्ते। इति तु सुनिश्चितमेव यावन्न स्वार्थान्धतायाः प्रतीकारो भविष्यति तावन्न हि परोपकारवल्ली पल्लविता संवर्त्स्यति। अद्यतने काले त्वेष व्याधिर्गृहे-गृहे हि नहि, घट-घटव्यापी दृश्यते। हन्त! कदा लोका उल्लाघतां लप्स्यन्ते।

जानाति साधकजनो यन्नैतद् विलोकनीयं, जल्पनीयं, कल्पनीयं च, किन्तु प्राप्तेऽवसरे तत्तद् विलोकितुं, जल्पितुं, कल्पितुं च सत्वरमातुरो भवति। तत्र बलीयसी वासनाया एव दुर्लक्ष्या सूक्ष्मा प्रेरणा।

अहह! धन्यास्ते द्वित्राः साधकशार्दूला यैर्निर्वासिता हृत्कन्दरोपिता विषयाणामदृश्या वासना।

## उद्योगः

उद्योगेनैव सिध्यन्ति, कार्याणि न मनोरथैः ।
नहि सुप्तस्य सिंहस्य, प्रविशन्ति मुखे मृगाः ।।

—नीतिः

उद्योगो जीवनम्, उद्योगो बलम्, उद्योगश्च साफल्यम् । उद्योगः कर्कशोऽपि कोमलः, उद्योगः कटुकोऽपि च मिष्टः । उद्योगिन एव जीवनानन्दमासादयन्ति । उद्योगिनामेव मधुराः स्वप्नाः प्राकट्यमयन्ते । उद्योगिनामेव पुरस्ताद् अनन्योपमेया महत्सम्पदो नरीनृत्यन्ते । उद्योगिनो नहि किमप्य साध्यमसम्भावनीयं वाऽऽमनन्ति । उद्योगिनोऽसाफल्यमाप्यापि नहीषदपि सीदन्ति, किन्तु सप्रोढि कञ्चिदन्यतरमुपायं मृगयमाणाः तादात्विकं साफल्यमञ्चति । हा ! कष्टम् ! अलसानां किं जीवनम्? ते तु जीवन्तोऽपि मृतप्रायाः, सजीवमङ्गं बिभ्रतोऽपि मृण्मयतुल्याः । आनन्दो मन्दानां चित्ते स्पन्दत एव नहि । सम्पदस्तु तेषां सामीप्यं सेवन्त एव नहि । तेषां तुन्दपरिमृजानां मनसैव कल्पिता नानाकल्पना जलरेखा इव निरन्वयतामधिगच्छन्ति । अनवद्या विद्यास्तु नहि जातुचिदपि तेषां सान्निध्यमध्यासते । किं बहुना ? शीतकास्तु सर्वत्रापि हता एव । विलोक्यताम्—लक्ष्मणद्वितीयेन दाशरथिना उद्यमबलेनैव कियन्महद् बलमेकत्रीकृतम् ? कथं पारावारस्तीर्णः ? कीदृशाःकीदृशा भीषणाः संग्रामा विहिताः ? जगद्रावणः कथं च रावणो व्यापादितः ? लक्ष्मणस्य शक्तिघातसमये चेद्रामः किञ्चनापि मान्द्यमाचरिष्यत्, नहि हनुमतः सकाशाद् यदि विशल्यामानाययिष्यत्, तदा कथं जीवितं लघीयांसं बन्धुमद्राक्ष्यत् ?

सूक्तमेकेन विज्ञवरेण—

आलस्यं हि मनुष्याणां, शरीरस्थो महारिपुः ।
नह्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति ॥

अहो ! कियता कष्टेन भगवता महावीरप्रभुणा विश्वव्याप्तं हिंसाकृत्यं दूरीकृतं, विशदमहिंसायाश्च महात्म्यं प्रकटीकृतम् । अथवा, उद्योगबलेन किमसाधीयः ? कर्मणां मुक्तिरपि उद्योगयोगेनैव प्राप्येति सर्वसमयसम्मतम् ।

ज्ञानिनां स्वार्थिकी क्रियापि स्वतः परार्थसाधनी । अज्ञानिनां बहिः परार्थप्रसितापि चेष्टा अन्तः स्वार्थविषसंपृक्ता एव । यतः— समन्ततः एकात्मभावभावितानां ज्ञानिनां स्वार्थे स्वत एव परार्थः समाविशति । स्व - परभेदविभक्तानामज्ञानिनां परार्थप्रकृतमपि कार्यं नहि सूक्ष्मां स्वार्थरेखामतिक्रामति ।

अहह ! सत्सङ्गमहिमा महिमाश्रितमानवमहनीयमहिमानमावहद्भिः कैर्नो-मान्यः ? नयनयननिभालित — नवनवोल्लासोज्जृम्भमाण — प्रमाणपृथुलपेसल-पद्धतिं प्रपित्सुभिः कैर्नो प्रशस्यः । चञ्चच्चन्द्रकर — कर्पूरनिकर — पुष्करावर्त-धाराधरोद्भूतोच्छलदखण्डधाराप्रपातधवलितां कीर्तिकान्तां परिरिप्सुभिः कैर्नाङ्गी-करणीयः ? तालव्यालेन्दीवरमृणालाभ्रचक्रवालाञ्जनगिरिमलीमसान्यपगुणशता-न्यपाकरिष्णुभिः कैर्नाचरणीयः ? किं बहुना ? किमस्त्यत्र विश्वस्मिन् विश्वेऽनः-परां काष्ठां विन्दमानः पदार्थसार्थः ? इति भणति गुरौ प्राथमकल्पिकः कश्चिदूहां कर्तुं लग्नः—' हंहो ! गौरवार्हा गुरवः ? इयान् सत्सङ्गमहिम्नोऽन-ल्पजल्पो गल्पवदाभाति मादृशां मन्दमेधसाम्, अतः सविस्तरश्चेद् वागूविलासो भवद्मुखसकाशतामास्तिघ्नुते तदैव प्रत्येतव्यः स्यान्नान्यथा ' ।

अथ सत्सङ्गमहिमघटघटनपटीयांसो गुरवस्तदारेकां निराचक्षाणा ब्रुवते— ' भो शैक्ष ! अद्यावधि त्वया संतामसतां च लक्षणान्यपि विदितानि न सन्ति, सङ्गममाहात्म्यं तु दूरे आस्ताम् । शृणु, तल्लक्षणानि पूर्वम् ' ।

शैक्षः—कुर्वन्तु कृपाम् ।

गुरवः—मनोवाक्काययोगैर्भिन्ना अपि अभिन्नाः । उक्तं च—**'मनस्येकं वचस्येकं, कर्मण्येकं महात्मनाम्'** । दम्भस्तमोन्मूलने तरला अपि च सरलाः ।

उक्तं च—**सरलगतिः सरलमतिः, सरलात्मा सरलशीलसम्पन्नः ।**
**सर्वं पश्यति सरलं, सरलः सरलेन भावेन ॥**

बुद्धा अपि अहङ्कृतिविरुद्धाः, विवेकोन्नता अपि प्रणताः, अव्यभिचरितविचारा अपि नानाशास्त्ररहस्ये कृतसञ्चाराः '**ज्ञानध्यानविनोदेन, कालो गच्छति धीमताम्**' इतिवचनात् । वावदूका अपि परदूषणप्रकाशने मूकाः, सकर्णा अपि परपरिवादश्रुतौ अकर्णाः, सनयना अपि अनयनिभालनेऽनयनाः, समुखा अपि स्वकीयोत्कर्षाऽऽविष्करणे विमुखा, गौरवगह्वरा अपि अपिहितबाह्याडम्बराः, विरक्ता अपि विद्याविभवोपार्जने चानुरक्ताः । अहो ! सज्जनानां केयं नूतना पद्धतिः ? अपकारेप्युपकारः '**छिन्नोऽपि चन्दनतरुः, सुरभयति मुखं कुठारस्य**' इति वचनात् । साधारणेऽप्यपरगुणे गौरवदृष्टिः, स्वश्लाघायां गजनिमीलिकावलम्बनम्, महति सन्तापे दत्तेऽपि न स्वभावत्यागः । उक्तमेकेन कविकुञ्जरेण—

**हिताय नाहिताय स्यान्महान् सन्तापितोऽपि हि ।**
**पश्य रोगापहाराय, भवेदुष्णीकृतं पयः ॥**

पुनरपि

**विगृहीतः पदाक्रान्तः, भूयोभूयश्च खण्डितः ।**
**माधुर्यमेवावहति, सुश्लोक इव सज्जनः ॥**

अहो ! कियज्जल्पाम्यहमथ सुगुणगणवलक्षाणि सतां सुलक्षणलक्षाणि सन्ति, तथापि प्रतिव्यक्तिव्यक्तानि कानिचिदुक्तानि । अथ तद्व्यतिरेकेऽसज्जना अपि वर्णिता अप्रासङ्गिका न स्युरतस्तदाविष्कारोऽपि विधीयते—मनोवाक्कर्मवैपरीत्यमादधाना यतः—'**मनस्यन्यद् वचस्यन्यत्, कर्मण्यन्यदुरात्मनाम्**' । मुखमिष्टा अपि परोक्षे तदनिष्टघटनपटिष्ठाः, वाचालाः, स्वकार्यसिद्ध्यर्थं कृतलालपालाः, हसितवदना अपि पतिते कार्ये दर्शितरदनाः । बदरीफलवद् बहिर्मनोज्ञाः, कज्जलवदन्तःश्यामलाः, कर्तरीवद्वक्रगतयः, अयोग्य-

स्थाने कृतप्रणतयः, गौरवार्थमुद्यम्यमानाः, किञ्चित्स्वविहिते कृताभिमानाः, नतां दोलामुपतिष्ठमानाः, न्यायमार्गाद्विहितप्रयाणाः, सम्पदि सहोदरायमाणाः, विपदि वृथैव वैरायमाणाः, चक्रवदनवस्थितस्वान्ताः, ईषदप्रियेऽपि दत्तप्रान्ताः, क्षणे क्षणे रुष्टतुष्टस्वभावाः, अनवसरेपि प्रदत्तहृदयभावाः, अवद्यपदव्यामनारत-प्रसक्ताः, मृषावाददिदूषणैश्चाऽविभक्ताः। अहो! दुर्जनानां विलक्षणां गतिः। तेषां भाषापि अनन्यसंकाशा, तेषां दृष्टिरपि हालाहलवृष्टिः, तेषा सङ्गमोऽपि करालकालव्यालागमः, तेषां स्नेहोऽपि स्तोकानेहा।

उक्तं च—

**'न भवति, भवति च न चिरं, भवति चिरं, चेत्फले विसंवदति।**
**कोपः सत्पुरुषाणां, तुल्यः स्नेहेन नीचानाम्' ॥**

अस्तु, तेषां वर्णनं वर्णैरवर्णनीयमेव। अथ सत्सङ्गमाहात्म्यव्याचिख्या-सयाऽऽह— पूर्ववर्णितानां सतामसतां च लक्षणानि लक्ष्यीकृत्याऽसत्सङ्गमपास्य सतां सङ्गमो विधेयः। नहि खलु तत्समीपस्थितिरेव सत्सङ्गमरङ्गं तरङ्गयति, नहि तडागभागमध्यासितो हि वितृष्णो भवेत्पानीयपानमन्तरेण, किन्तु तदखर्वगुणानामुरीकरणं हि सत्सङ्गमः प्रोच्यते।

शैक्षः—भगवन्! किं तर्हि सतां माहात्म्यं यदि तद्गुणानामनुसरणमेव सत्सङ्गः, गुणानुसृतिस्तु आत्मनो धर्मः तत्र तेषां किमुपकारप्राग्भारः?

गुरवः—नहि-नहि, अप्राप्तहार्दस्त्वम्, नूनमेवास्ति तेषां गौरवाधि-क्यम्। ब्रूहि, बालः कथं ज्ञातवाग्जालः? किन्तु मातापित्रोः शब्दान् श्रावं श्रावं तदङ्गीकारपरायणः स स्वयमेव जायते। इत्थं तेषां सत्पुरुषाणां जल्पन-निभालन-शमन-गमनाल्पवचनादिक्रियामीक्षमाणः स्वयमेव तत्स्वीकृति-

सम्मुखं स्यादेव शिष्य ! अत्र कापि वैज्ञानिकी शक्तिरपि सुज्ञा घटीति—यत्सतां शुभाध्यवसाय वर्गणागताः शुभपुद्गलाः समीपस्थं जनं परितः स्पृशन्ति ततस्तद्भाववैशद्यं च सम्पादयन्ति, पुद्गलानामलौकिकशक्तिस्वीकारात् । यद्यात्मनो-धर्मस्त्वया प्रोक्तः स नानुचितः, तथापि तत्प्रकाशकवस्तुसहाय्येन वस्तु सुप्राप-मेवेति न शङ्कनीयम् । ततः सुसज्ञापसङ्गमहात्म्यं त्वनिर्वचनीयमेव । लोकेऽपि अनेके दृष्टान्ताः स्पष्टमेव दृष्टिपथमवतरन्ति । यथा वाराङ्गनागृहसोपानमधिष्ठितः कोऽखण्डितशीलः समुत्तीर्णः ? मद्यविक्रयिकापणमधिगतः कः कलावैकल्यं नागमत् ? तथा साधुवर्याणां स्थानमाश्रित्य कस्को वैराग्यदोलां नान्दोलितवान् ? पुनर्दृढप्रहारिचिलातीपुत्रप्रमुखाणां, वर्णनं न केषां चेतश्चमत्करोति ? अत आत्महितैषिभिर्जनैः सत्सङ्गमः सततमाश्रणीय एव । **'क्षणभरसज्जनसङ्गति-रेका, भवति भवार्णवतरणे नौकाः'** इति

शैक्षः—बाढं बाढं भगवन् ?

बलाहकाः ! किं नेयमसमीक्षितकारिता भवताम् ? यदपारि मेयवारिवहनं, तत इतो धावमानैस्तद्वर्षणं, रिक्तीभूय पुनः प्रत्याव र्त्तनम् । किंकिल कदाप्यास्वादितं स्वानीतं मधुरमम्भः ?

मोमुद्यमानैर्मुदिरैरुदीरितम्—"तृषाकुलानां तृषोपशामनमेव व्रतं जलमुचाम् ! कीदृशं तत्स्वादु त एव विदाङ्कुर्वन्तु ।"

## सर्वत्र नहि स्वतन्त्रता हितावहा

अनायासमेकदा मेघाग्निपवनाः सम्मिलिता इत्थं विमर्ष्टुं लग्नाः। प्रथमं मेघो ब्रूते "सखायः! किमिदमन्धकारम्? किमिदमन्याय्यम्? यत्, संसारे परोपकृतिपण्डितानां मादृशामपि पराभवः? अहं जीवनदाताऽस्मि: मदीयेनैव जीवनदानेन भवति सुफला शस्यश्यामला धरणिः, मत्कृपयैव समयान्ति तुङ्गतरङ्गास्तरङ्गिण्यः, तासां योगेनैव भवन्ति ऊर्ध्वोदकाः कूपाः, तेषामम्भसैव जीवन्ति जीवलोके लोकाः। क्वचिन्मरुप्रदेशे तु अपेयपानीया उदपानास्तत्र केवलमहमेवाधाररूपः, मदीयं जलममृतमिव च संगृह्णन्ति तत्रत्याः। किं बहुना? मत्करुणयैव जीवत्यसौ जीवलोकः, परन्तु मम हृदये तथापि शान्तिर्नास्ति। यतः—यत्रैव मदीयं जलं गच्छति तत्रैव नियन्त्रितं भवति। यथा—काचित्कान्ता मां घटे स्थगयति, काचिदुखामिश्रीकरोति, कश्चिद् ग्रामनायको बद्धपालिप्राकारे कासारे मां स्थिरयति, कश्चित्कार्षिको मामालवाले सञ्चिनुते, क्वचित्परोलक्षरूप्यकाणां व्ययेन निर्मीयन्ते महाम्भसां बन्धाः। अलं पल्लवितेन, पारतन्त्र्यं महादुःखमयं, कृच्छ्रमयं, किमन्युक्तं मया, वाच्यं भवद्भिः किमपि सुखरूपम्।"

स्वरूपजाज्वल्यमानेन ज्वलनेन साम्प्रतं वक्तुमारब्धम्—"मित्र! मदीया स्थितिस्त्वत्तोऽपि निकृष्टा वरीवर्ति यथा—यदि न स्यामहं कथमन्नानां पाको जायते? कथं दुग्धं नीरं चोष्णं भवति? मत्साहाय्यमन्तरेण हिमानीमयः शीतर्तुः कथं निर्गमितः स्यात्? कोऽल्पवस्त्राणां निर्वस्त्राणां वा योगिनामाधारो निशि मां विना? कः सरोगान् नीरोगीकुरुते मत्सेकादृते? अहो! व्यस्मारि

मया —कः प्रकाशं कुरुते अत्र मम हिरुक्[1] प्रसर्पत्सन्तमसे प्रदोषे ? किं वर्णयामि रात्रौ मार्गदर्शकश्चाहमेव, यत्राहं दीपकरूपेण विराजे तद् गृहमेव माङ्गलिकम् इतरत् त्वितरत् ; तथापि कृतघ्ना लोका नहि मत्स्वातन्त्र्यं काङ्क्षन्ते, चेष्टन्ते च मां नियन्त्रयितुम् । काचिद्रमणी सम्पूर्य स्वकीयं पाककृत्यं, स्थगयति मां चुल्ल्यां भस्मराशिना । काचिद्दीपिकां प्रज्वाल्य पिदधाति मां काचभाण्डेन । आलप्यालमिदम् , यदाधुनिकैर्मन्नियन्त्रणेनैव भूरिकार्याणि कृतानि । यथा—वाष्पयानेऽपि मदीया नियन्त्रणा, घटीयन्त्रेऽपि मदीया नियन्त्रणा, विचित्र-चित्रकार्यकुशले विद्युत्प्रवाहेऽपि च मदीया नियन्त्रणा । खिन्नोऽस्म्यहं तु किं कुर्वे, निर्दिश्यतां कोऽपि सुगमः पन्थाः " ।

साम्प्रतं पवनेनापि स्वदुःखं प्रकटीकृतम्—" भ्रातरः ! किमहं वच्मि, मदीया जीवनचर्यापि भवद्भ्यां वर्या नास्ति । इति तु सर्वविदितमेव यदहं जीवनरूपोऽस्मि । प्राणापानादयः सर्वेपि वायवः मद्रूपा एव, क्षणमेकं यदि मदभावः स्यात् तर्हि जीवलोकोऽन्यादृश एव स्यात् । मां विना भवतोर्द्वयोरपि किं रूपम् ? सर्वत्र मम प्रेरणा हि क्षेमङ्करी । संसारे यावन्ति यन्त्राणि चलन्ति तत्र सर्वत्र मदीय एव सहयोगस्तथापि सर्वमुपकारभारं विस्मृत्य जना मां नियन्त्रितुकामाः सन्ति । केचिन्मुनयो गुहायां निवसन्तो मां निरोद्धुं प्रयतन्ते, केचिदेकान्तसेविनो वैज्ञानिका विविधैः प्रयोगैर्मन्नियन्त्रणपराः । वह्ने ! त्वया सह तु मन्नियन्त्रणमावश्यकम् । भृशं दुःखितोऽस्मि नियन्त्रणेन । अहं तु स्वभावतोऽप्यप्रतिबद्धविहारोऽस्मि कथमहं नियन्त्रणपीडां सहे " ।

अन्ते त्रयोऽपि शक्रस्य सुधर्मसभायां गताः । स्वःस्वनियन्त्रणकथा

---

१ विना

न्यायालयस्याऽग्रत उपढौकिताः। सर्वां दुःखवार्तां निशम्येन्द्रेणाऽभाणि—'भवद्भिः स्वयमेव नेत्रयुगलं संमील्य विचारणीयम्—यदस्माभिः स्वतन्त्रैर्भूत्वा किं वरं कृतमिति। स्थाने परतन्त्रतापि श्लाघ्या वेविद्यते। सर्वत्र नहि स्वतन्त्रता हितावहा'।

पुष्पाणि! युष्माकं कीदृक् कान्तं, शान्तं, नैसर्गिकं च वातावरणम्? केषामप्यपरिचितानां परिचितानां च सर्वजन्तुजातसुलभेन सौरभेण सादरमातिथ्यम्। कृतोपकारविमुखाः शिलीमुखा दुःखाकुर्वन्ति युष्मान् तथापि देदीयमानं मकरन्ददानं न किं श्लाघनीयम्? अहो! पवित्रं लोकोत्तरं चरित्रं युष्मदीयम्?

स्मितवदनारविन्दैस्तैः केवलमिदमेव व्यक्तीकृतम्—'सुमनसां स्वाभाविकमेतत्, नाश्चर्यंकारि किमपि'?

वृते ! त्वं कण्टकिनी तीक्ष्णदंष्ट्रा परितः परिस्थिताऽसि । पुष्पाण्याघ्रातुं, फलानि भोक्तुं, पत्राण्यादातुं चाभिलषन्तोऽपि जनास्त्वदन्तरितत्वान्नान्तः प्रवेष्टुमलंभविष्णवः । किं नाम सा सुषमा कुसुमावलीनां यन्नहि समस्तैरागन्तुकैराघ्रीयते ? किं नाम तानि चित्ताकर्षकाणि मधुमधुराणि फलानि यानि नहि सकलैः भोक्तुकामैर्लभ्यानि ? किं नाम तानि दलानि यानि नहि भेषजार्थं सुलभानि ? कण्टकाकुले । किं नैतद्गर्हितम् ? यत्केचन जना एव त्वत्तो लब्धभोगाः स्वमनीषितं पूरयेयुः । यदि कश्चन साहसिको भूत्वा त्वमतिवर्तितुं चेष्टेत, तदा कोपाकुला त्वं त्वरयैव खरैः कण्टकमयनखैर्विदारयसि, वस्त्राण्यपि विदरीकरोषि, किं तवैतत् अमानुषिकमाचरणं नहि विलसति ? किं वर्णयामि त्वयि नहि कोऽपि गुणो विभाति । अतः स्वस्वभावं परित्यज, आवरणसंज्ञां परिधर्तय, मन्यस्व मम वचनम् ।

वृतिर्ब्रूते—'भ्रातः ! अविज्ञातरहस्यो हि एवं ब्रूषे, नहि मम कियत्यावश्यकता क्षेत्रोद्यानादिरक्षणाय ? अहं कियदुपकारिणीति नहि वेत्सि । सखे ! आन्तरदृशा प्रेक्षस्व । तव कृता आरोपास्तु सर्वेऽपि निर्मूला एव वर्तन्ते । यथा च—'त्वमन्तरायदात्री पुष्पफलादिग्राहकाणामिति यद्वादि तदसुन्दरम् । किञ्च—यदहं नान्तरिता भवेयं तदा नहि पुष्पाणि पाससुरभीणि, नहि फलानि फलत्वावच्छिन्नानि, नहि पत्राणि कार्यपरिणतानि च जायेरन् । यतो ये केऽपि पांशुलपादा अनावृतं क्षेत्रादि विलोक्य तत्रागत्य च असमय एव पुष्पादीनि पातयेयुः, गोगर्दभादयश्च समूलं विध्वंसयेयुः, पुनर्बालकादयश्च अपक्वान्येव

फलानि विक्षिपेयुः ; अतो मद्रक्षयैव एते उपद्रवा व्यपसरन्ति। मार्गगामिनस्तु मत्सकाशाद् यथोचितलाभं लभन्त एव, परन्तु चेत्कश्चिन्मामुल्लङ्घयितुकामः स्यात् तदाहं न कथं दण्डयामि? न कथं विदारयामि? पशविकं कार्यं तु अस्त्येवैतत्; सत्पुरुषास्तु कदापि नौचितीमतिक्रामन्ते। सीमातिवर्त्तिनस्तु मत्पालकैः प्राप्तप्रहारा भविष्यन्त्येव नात्र संशयः। भ्रातः! सर्वेऽपि पदार्था नियमिता एव शोभन्ते, सीमिता एव च विराजन्ते। अहो! भिक्षुस्वामिभिरत एव मर्यादीकृतं जैनं शासनम्। संघचतुष्टयमुद्यानम्, वृतिर्मर्यादा, उद्यानवृतिरक्षकाश्चाचार्या विलसन्ति।

'नालिकेर! त्वं सरलस्कन्धरुहोऽपि जटिलः। तरलकोमलान्तःकरणोऽपि कठिनकरङ्कपरिवेष्टितः। किमिदमौचित्यमञ्चति?' पृष्टं केनापि नव्यनैयायिकेन।

'प्रकृत्यर्पिते नहि तर्काणामवकाशः। नाहं कर्कशतर्कपण्डितोऽस्मि यद्वितण्डाताण्डवं दर्शये'। नम्रमुत्तरमदायि नालिकेरेण।

## समुद्रता स्वीकार्या

अगामहमेकदा समीरसेवार्थं 'जूहू' समुद्रतीरे। निर्मले सैकतमये तत्पुलिने विहरमाणोऽपरिमेयपयोराशिं प्रेक्ष्याऽऽनन्दमग्नमानसोऽहमानन्त्यकल्पनापरः क्षणमभवम्। गतागतपरायणं वीचिनिचयैराहन्यमानमपि ससीमं तज्जलं निभाल्य प्रेम्णा पृष्टं मया—'सह मुद्रया—मर्यादया वर्त्तते इति समुद्रः' अथवा 'मितं द्रवति—गच्छतीति मितद्रुः' इत्यादिसंज्ञाभिस्त्वं प्रतीतोऽसि पारावार! अनन्तशक्तिभृदपि मर्यादितः किमिति न त्रपास्पदम्? केन त्वं नियन्त्रितोऽसीति जिज्ञासते मामकं मनः। ईहसे चेत्—क्षणेनैव जीवलोकमाप्लावयितुमीशः, केन शङ्कितो भीत इव किञ्चिदग्रेसरो भूत्वा पुनः प्रत्यावलसे स्वाधिष्ठितपदं प्रति।

स्वकूलसमुपस्थिताऽतिथिचरणयुगं क्षालयन्निव गर्जारवव्याजेन निर्मलाशयो जलधिर्व्यञ्जयितुं प्रवृत्तः—'साधो! अक्षमाणां क्षमापि कातर्यदोषदुष्टत्वान्न क्षमेति सम्भावनीया। क्षमाणां क्षमा हि क्षमेतिशब्देन सम्बोध्या। बलात्परैर्नियन्त्रिता अपि दुर्मेधसोऽभव्या मनसा त्वनियन्त्रिता एव। परोपकारपरायणतया स्वकर्तव्यदृशा वा स्वकृतनियन्त्रणमेव वास्तविकं नियन्त्रणम्। इदमेव महात्मनां माहात्म्यं यत्ते शक्तिशालिनो भूत्वापि स्वात्मना स्वनिग्रहं कुर्वाणाः परानल्पसत्वाननुपदिशन्ति। सन्तु समुद्र-प्रभृतीनि नामानि मामकीनानि, यानि समुत्प्रेक्ष्य चेदैदंयुगीनो मानवगणोऽपि समुद्रतां स्वीकुर्यात्। इतरत् पुनः कर्हिचित्'।

# प्राकृतिकं पवित्रम्

अहो! सर्वमपि प्राकृतिकं पवित्रम्। विश्वम्भरा धरा स्वत एव पावित्र्यमूर्तिः। मलशोधनार्थमेव मन्ये निर्मलेन जलेनाधारि तरलं स्ववपुर्द्रलम्। उत्पत्तिपरिपूतो हि तनूनपात् पावकनामा परैरपवनीयमपि पवित्रयति पित्तलादिकम्। नाम्नापि पावनतापरः पवनस्तु बम्भ्रमीति पावनीकर्त्तुमेव परान्। तद्वद् वानस्पत्यमपि महामलिनकचवरादिपुञ्जमात्मसात् कुर्वाणं कामपि सद्यस्कामारामोद्यानादिशोभां विवर्धयतितराम्। विभावसुस्तु विशोधयति, शुष्कयति, तापयति च ग्रामं-ग्राममभ्रपथे नानाविधामयगन्धजुगुप्स्यानि पङ्किलानि स्थलानि। भुजङ्गमगत्या प्रवहन्त्यो वाहिन्योऽपि विमलीकुर्वन्ति सर्वाण्यपि मलाविलानि जलानि। सर्वमपि पारिपार्श्विकं महानगरनालिकानिर्गतमतिदुर्गन्धमयं मलमेकेनैवोल्लोलकल्लोलेन विलीनयति वीचिमाली नितराम्। हन्त! हन्त! महामतिना मानवेन कुतः समानीता मलिनभावना? तयैवातिपवित्रमपि वातावरणममेध्ययति बुद्धिवैभवाभिभूतोऽयं यत्र तत्र। पिबति चेन्मूकीभूय परमपूतं प्राकृतिकं रसं, नूनमयमपि सेवते सार्वत्रिकीं कामपि पवित्रभावनाम्। अन्तः पवित्रितानां सर्वत्र पवित्रं पवित्रमेव।

## सर्वं सापेक्षम्

किं कटु-किं मिष्टम्? किमनिष्टं किमिष्टम्? कोऽलाभः का हानिः? किं[1] विकासः किं ह्रासः? किमस्तं किमुदयः? किं जीवनं किमवसानम्? का जागर्या का निद्रा? किं सुखं किं दुःखम्? किं हर्षः किं शोकः? किं हास्यं किं रोदनम्? किं गतिः किमागतिः? किमुत्थानं किं पतनम्? किं रागः किं द्वेषः? किं घटनं किं विघटनम्? किमुष्णं किं शीतम्? किं लघु किं गुरु? किं कोमलं किं कर्कशम्? किं सुरभि किमसुरभि? किमु गर्हा किमु प्रशंसा? किमु वृद्धिः किमु क्षयः? किं शोभनं किमशोभनम्? किं मौनं किं व्याख्यानम्? किं दानं किमादानम्? कः काकः कः कोकिलः? का बुभुक्षा का तृप्तिः? किमु लोहं किमु स्वर्णम्? किं मलिनं किं धवलम्? किं दारिद्र्यं किमैश्वर्यम्? किं श्रामण्यं किं गार्हस्थ्यम्? किं बन्धः किं मोक्षः? का प्रवृत्तिः का निवृत्तिः? किं त्यागः किं भोगः? किं विषं किममृतम्? किं पापं किं पुण्यम्? किं प्रकटं किं रहस्यम्? किं हृद्यं किमहृद्यम्? किं हेयं किमादेयम्? किं कल्प्यं किमकल्प्यम्? किं कार्यं किमकार्यम्? किमुच्चं किं नीचम्? किमु सूर्यः किमु राहुः? किमन्धकारं किमुद्योतः? किं दाक्ष्यं किं मौढ्यम्? अहह! सर्वमिदमेवास्ति सापेक्ष-कक्षादक्षम्। विहितान्तर्जल्पा बुद्धिविकल्पा एवाऽङ्ग सुखदुःखसंकुलं सम्पादयन्ति। सर्वत्र साम्यं सूत्रयन्ती समुदेति यत्र सापेक्षिकी तात्त्विकदृष्टिस्तत्र नाविर्भवति द्वन्द्वानां द्वन्द्वम्। ऊर्ध्वगामिनां सर्वेपि खेदकृद्भेदा निम्नीभूय तिष्ठन्तितमाम्।

---

[1] किमिति अव्ययं प्रश्नवाचकम् अतो न लिङ्गव्यत्ययश्चिन्त्यः।

## वैचित्र्यमूलं जगत्

प्रावृषेण्यं दुर्दिनमपि सुदिनायते सर्वेषाम्, अतो न कथनीयं मा पश्यन्तु केऽपि दुर्दिनानि ।

पक्वफलानां स्वस्थानात्पतनमपि पथिकैरभिलषणीयम्, अतो न वक्तव्यं माभूत् पतनं केषामपि ।

रसराजस्य मरणमेव म्रियमाणानां शरणम्, अतो न धारणीयं केवलममङ्गलमेव मरणमिति ।

प्रत्यहं रिक्तीकरणमेव कूपानां सौभाग्यम्, अतो न वाच्यं माभूयात्कोऽपि रिक्त इति ।

सुरभिवमनमेव प्रसूनानामुत्कृष्टमाकर्षणम्, अतो नैदमैकान्तिकं वमनं व्याधिरिति ।

समायाति खलु सुचिरतापाकुलजीवलोकप्रतीक्षिता विपरीतदिग्गामिना वातेनैव वृष्टिः, अतो न निश्चितमिति सर्वमपि विपरीतं–विपरीतम् ।

स्तम्भानामनमनमेवाऽभ्रंलिहप्रासादानामस्तित्वम्, अतः सर्वे सन्तु नमनशीला इति न यथाऽर्हमाशीर्वचः ।

अहो! समूलनष्टा एव सर्वौषध्यः सम्पादयन्तितरामपरस्मिन् वर्षे कर्षगव्योम्यानि वप्राणि, अतो मास्तु समूलनष्टं किमपीति कथं विज्ञैः स्वीकार्यम्? अहह! गम्भीराश्चिन्तनगम्या विचित्रा जगतां व्यवहाराः ।

## आनन्त्यम्

वृक्षाः! यदा कदाऽहं युष्मान् विलोके तदानीं प्रायो यूयं पुलकिताङ्गोपाङ्गा आन्दोलितमूर्धान आस्फालितकरपल्लवाः शश्वद्धरितभरिताः स्मयमानपुष्पपुञ्जा नयनपथमवतरथ। अहो! कौतस्कुतोऽयं परैः स्पृहणीयो नित्यनवीनो हर्षातिरेको युष्माभिरासादितः? बत! बत! ग्रीष्मर्त्तुतापोऽपि सन्तापयति, सरोषं प्लोषयत्यपि हिमानी, कुब्जीकरोति झञ्झावातोऽपि, अतर्कितं च स्नपयन्त्यासारधाराभिघर्नाघनाः, तथापि न नाम कापि म्लानिरनुभूयते भवद्भिः किं न चित्रणीयमिदं सामर्थ्यम्? जिघृक्षतितरां मामकं मनोऽपि तादृक्षमपौरुषेयं पौरुषम्, अवश्यं किमप्यत्र गोपायितं तत्त्वम्। यद्यस्ति प्रकटनार्हं तर्हि कृपया प्रकटनीयम्।

दोधूयमानाङ्गयष्टिभिस्तैर्मर्मरशब्दमिषतो भावगम्यमदायि प्रतिवचः—'शुभानुऽयोजना भावत्की। तत्रैवास्ति ग्लानिम्लानिखेदविषादादिकं यत्राऽवरुद्धगतिर्नवविचाराणाम्, अवकाशोऽन्धविश्वासानाम्, अनुन्मेषोऽनुभवानाम्, साम्राज्यं जडतायाः, सर्वाधिकारोऽहंमन्यतायाः, परिपालना च कालावहेलितरूढ्याः। भद्र! कारागृहानुकारे जीवने कुतस्त्याऽऽनन्दरेखा समुल्लसति। आस्मादृशां तु जनिरप्यजनि नूनमनन्ताजनन्या उत्सङ्गे। मातृमुखतो ह्यपाठि प्रथमः पाठोऽनन्ततायाः। वृद्धिरप्यलम्भि तथैवानन्ताकाशावकाशे। अन्ततविहारिणा समीरेण सह सम्भवति नः सङ्गीतगोष्ठी। विस्मरसि किमनन्तचतुष्टयसम्पन्नानामर्हतां माहात्म्यम्? नाश्चर्यं विष्वगानन्दमयी ध्रुवमानन्त्यभावना।

## आधारमन्विष्यन्ति आधेयाः

अभ्रच्छन्नमाकाशम्, शीतलः समीरणः, सहजशोभनः प्रत्यूषसमयः, लघु मानसम्, निरामयं च वपुः, प्राप्तवानहं 'जूहू' जलधिसामीप्यम्। पुलिनभागमलंकुर्वाणा नयनायनमागता सशब्दं दोधूयमाना अत्युन्नता नालिकेर-वृक्षाणां पङ्क्तिः। जनन्याः स्तनन्धयन्तीव[1] शाखास्कन्धमध्यगतानि परात्परा-श्लिष्टानि भूरिशो नालिकेरफलानि प्रोन्नतकन्धरेण मया दृष्टानि। तत्कालमजनि जिज्ञासाकुलं चेतः। क्षारोदधितीरे क्षीरोपमक्षीरोपलब्धिः कौतस्कुती नालिके-रोदरे? प्रत्यक्षे संशयेनालम्। इतीव फलान्यभिमुखीकुर्वता मया तत्कालम-प्रच्छि स्निग्धमधुरजलोपलम्भकारणम्।

प्राप्तमनुत्तरमुत्तरम्—'भ्रातः! अस्ति स्वयोग्यताऽनुसारिणी सर्वशः सर्वतः सर्वत्र वस्तूपलब्धिर्निःशङ्कम्। इदं कटु, इदं मिष्टमित्यध्यवसायो बहिर्दृशाम्। 'अनन्तधर्मात्मकं वस्तु' इति निर्णयोऽन्तरङ्गदृष्टीनाम्। घृणि-तेऽपि पङ्के न दृष्टा निष्पङ्का पङ्कजावलिः? अमृतोपमेपि मधुरे जले किं मिष्टो दृष्टो निम्बः? पार्वतीयेपि प्रदेशे न निभालिता किं पुष्पिता पल्लविता फलिता च सहकारश्रेणिः? प्रकृत्या इदमेव गूढतमं रहस्यं यद्—यथार्हा सर्वेषां पूर्तिः समन्ततः स्वयमेव जाजायते। नूनं कातर्यमेतन्मनुष्यमेधायाः यत् स्वयोग्यता-मनालोचयन् वातावरणमेव दूषयति। स्वपात्रतामनभिवर्धयन् दातारमेवाऽऽक्रो-शयति। अहह! आधारमन्वेषयन्तो भ्रमन्त्याधेयाः पदार्थाः।

●

---

[1] स्तनन्धया इव आचरन्तीति, स्तनन्धयन्ति, ततः शतृप्रत्ययस्य क्लीबलिङ्ग बहुवचनम्।

# किमसुलभम् ?

नालिकेर ! केषाञ्चित् बाल्यमतिललितम् । केषाञ्चन यौवनमति शोभनम् । वार्धकमपि च केषां वर्धमानसुखम् , परन्त्वेकरूपावस्थात्रयी नात्र विलोक्यतेतरां विचित्रे जगति प्रायशः । त्वदीया तु पोतावस्थापि सुधोपम-पानीयदानपट्वी परमोपकारिणी ध्रुवमामयाविनां तद्वदनामयाविनामपि । यौवने तु जातधवलितललितसुन्दरसंदर्भे स्त्यानीभूतं ते गर्भं को न भक्षितुमभीक्ष्णं चपलो भवति चेतसा ? स्थविरे तु स्नेहमयं ते शरीरं नानाकार्यकलापदक्षं प्रत्यक्षमनुभूयते सर्वैरपि । अहो ! एधमानगौरवं विलोक्य तेऽवस्थात्रयं को नाम स्पृहयालुर्न भवेदीर्ष्यालुः ? लब्धसुगुरुत्वरविस्या क्वेदृशी प्रशस्या तपस्या तप्ता योगत्रिकतस्त्वया ?

अध्यात्मयोगीवाऽनाटोपि गुणगौरवशालि नालिकेरमुत्तरच्चि—' भद्र ! क्वास्मादृशेषु साधना, तपस्या, जपो, ध्यानं, ज्ञानं वा ; केवलमयमेव परममन्त्रः प्राप्तोऽस्माभिः पूज्यपूर्वजपुरुषैः—' स्वतो विरतानां परहितनिरतानां विश्वम्भरायां किमसुलभं वरीवृत्यते तावत् ' ।

## मास्प्राक्षीः

पुष्पवाटिकायां समागतः कश्चित् श्रद्धालुः स्वार्थपरायणः। प्राभातिक-शुभावसरमहोत्सवमग्नानीवोन्मिषितानि हसितानि परितः क्षुपेषु विलसन्ति पुष्पाणि। कानिचित् क्षमाऽम्बोत्सङ्गोत्सुकानीव लुठन्ति भूभागे स्मयमानानि। अहा! कीदृक्षं सहजसुषमं सुन्दरं वातावरणम्?

'अरे! प्रतिक्षणं पतनं सुमनसां न सह्यते मया। अभिलषाम्यहं क्षुपोपरित एव विधातुं कोमलकरकमलेन भवतां सादरं चयनम्। सत्यं वृन्दारक-पर्युपास्त्यै उपढौकितानि भवन्ति[1] लप्स्यन्ते गोलोकसौख्यसामग्रीम्। किञ्चिद-त्रत्यया यातनया न भेतव्यं भवद्भिर्यल्लब्धसुखलववलिदानेनैव करायत्तीस्यात् परार्ध्यकालभोग्या निरुपमा लक्ष्मीः'। वहु वर्णितमागन्तुकेन तेनैवम्।

'अपसर - अपसर, याहि - याहि, गच्छ - गच्छ दूरत एव स्वार्था-न्धल! कस्मादकस्मादापतितोऽसीह? मास्प्राक्षीः प्रोज्जासनजरठेन शठेन कुटिलेन ते करेण नः कोमलाङ्गयष्टिम्। नैसर्गिकं पतनमप्यस्माकं नहि विधत्ते किं पुण्यां पार्थिवीं सेवाम्? अतोऽतिरिक्तं किमास्ते युष्मत्कल्पितेषु मृन्मयेषु देवेषु? नैतदवगन्तुं शक्यते यत् तत्रैव तेषां देवानां निवासो नेतरत्र। क्षणविल-क्षणमपि जीवितं शतशः शुभाशाधाराप्रवाहितं तत् त्रोटितुं कोऽधिकारो युष्मा-दृशामन्धश्रद्धालूनाम्' कम्पमानकोमलान्तःकरणैः सुमनोभिरदुष्टं स्पष्टमुद्घुष्टम्।

---

१ भवत् शब्दस्य क्लीबलिङ्गे बहुवचनम्, यूयमित्यर्थः।

## साधना हि फलवती

"पादपाः! स्थानस्था एवाऽनायासं भवन्ति भवन्तः फलवन्तः। वयं तु बम्भ्रम्यमाणा भृशं कष्टानि सासह्यमाना अपि न भवामो यथाकामितं फलभारभ्राजिष्णवः। किमत्र तिरोहितं तत्त्वं युष्मत्सफलतायाः" वितर्कितं मया।

तत्त्वमविदुषो मे समीपमुपतस्थुषः शीतलच्छायया सम्मानं ददानास्ते प्रावोचन्—"कर्हिचिदपि नहि सम्भावनीया भद्र! अतपस्विनी फलावाप्तिः। त एव फलेग्रहयः सन्ति भूतले यैर्बाह्यमाभ्यन्तरं वा तितिक्षादक्षैरनल्पीयस्तप्तं तपः। नाववुद्धसे किमु कतिचित्साध्यमानानि योगाङ्गान्यस्माभिः। अहह! अस्मासु केचिल्लकुटासनेन स्थिताः, केचन कुब्जासनस्थाः, ऊर्ध्वबाहवः केचित्, केचित्प्रलम्बितभुजदण्डाः, निम्नीकृतग्रीवाश्चाऽपरे, अपरे भूमिन्यस्तहस्तास्तिष्ठन्ति भूरि-भूरिवर्षाणि यावत्। जन्मसिद्धा ह्यहिंसा प्रसिद्धास्मदीया। लेष्टुमारे छेदे भेदेऽपि पुण्यकारुण्यदानम्। सद्भ्यो हितं सत्यं तु निहितमेवास्मदीयानां प्रतिरोमकूपम्। अदत्तादानस्य तु वर्णनमपि नाऽऽकर्णितं मद्बन्धुभिः। ब्रह्मणि चर्यायै खलु स्वीकृता वर्या तपश्चर्या मामकीनैः। असंग्रहाग्रहेण पूर्णमपरिग्रहिणो मदीयाः। शौचसन्तोषाद्यागुणास्तु प्रगुणा एवाऽत्र न केषामपि मतद्वैधम्। जलाऽनिलातिरिक्तं किमपि न ग्राह्यमित्याजीवनं महाघोरमनशनव्रतम्। शीतोष्णाद्याः परीषहास्तु सोढव्या एवाऽस्माभिरिति विदितचरं सर्वैः। कियद् वर्णयामः? इत्थमनेकाऽनेकदारुणसाधनानन्तरिता वयं फलवन्तो भवामः, पुष्पिताः, पल्लविताश्च तिष्ठामः। पूर्वमाचरितं तपः फलत्येवाग्रे नाऽऽरेकणीयं किञ्चित्"।

निमीलितनयनयुगलेन मया निशमितमेतत्। सत्यं, तथ्यं, पथ्यमितीव स्वीकुर्वता साधना हि फलतीति निर्णीतं मया।

द्विकोऽपि कृष्णः पिकोऽपि च कृष्णः, किन्तु रूपसाम्येन किम्?
लवणमपि धवलं खण्डापि च धवला, किन्तु वर्णसाम्येन किम्?
पाटलमपि पुष्पं किंशुकमपि च पुष्पं, किन्तु जातिसाम्येन किम्?
पुरन्दरोऽपि च हरिः वानरोऽपि च हरिः, किन्तु नामसाम्येन किम्?
स्वर्णमपि खनिजं लोहमपि च खनिजं, किन्तु देशसाम्येन किम्?
अमृतमपि सिन्धुजं विषमपि च सिन्धुजं, किन्तु पितृसाम्येन किम्?
घटीयन्त्रमपि चलति वाष्पयानमपि च चलति, किन्तु गतिसाम्येन किम्?
आसक्तोऽपि करोति अनासक्तोऽपि च करोति, किन्तु क्रियासाम्येन किम्?
अज्ञोऽपि जीवति विज्ञोऽपि च जीवति, किन्तु जीवनसाम्येन किम्?

## निसर्गजन्यं हि सुन्दरम्

मलयज! त्वयि केन पूरिता काप्यद्भुताऽलौकिकी मनोहारिणी माधुरी? विलसति बहुषु विकस्वरेषु नानावर्णेषु किसलयपुष्पपर्णेषु इत्वरी गत्वरी सौरभलहरी, किन्तु व्यतीतेष्वहोरात्रेषु तेषां दयापात्रेषु गात्रेषु न नाममात्रमप्यभितोऽनुभूयते सुरभिवैभवो भ्रमरप्रकृतिभिर्भव्यैः। त्वयि तु वयस परिपाकेन साकं परितः परिचीयतेतरां परिवर्धमानपरिमलपेशला पावनपरमाणूनां परम्परा भृशमामोदमुदितैर्मानवैः। किमिति न चित्रणीयमभिवन्दनीय चन्दन!

सहजपवमानेन सह परिवहमानं परितः प्रसृमरं परिमलं प्राभृतीकुर्वन्निव निसर्गपटीयान् पाटीरः प्रकटयितुं प्रवृत्तः—'सखे! प्रदर्शनप्रियाणि, प्रत्यूपाद्यवसरविशेषलाभलोलुभानि, दिवसपतिं निशापतिं वा तोषयितुमिच्छूनि क्षणिकसौरभाडम्बरबन्धुराणि नानावर्णप्रसूनप्राग्भारभ्राजिष्णूनि च तानि निर्बल-कमलादिक्षुपानि। यावन्नहि समुज्जृम्भते सर्वाङ्गीणं तादात्म्यं तावन्नैकाङ्गिसङ्गितयः कदापि भव्यभङ्गिमानमावहति वस्तु। मया तु जन्मनैवाऽलम्भि मधुरामोदस्यैवा बोधपाठः। नितान्तं तन्मयतया नहि क्षेत्रकालाद्या मां परिवर्त्तयितुमीशाः, संक्षेपतो निसर्गजन्यं हि शश्वत् सुन्दरमिति मामकीनं रहस्यम्।

## सहिष्णुः शतं समाः जीवति

अभवमहमेकदा वृक्षैः सह संलापपरायणः। अतर्कितं किमिति भवादृशां जीवनमिति वितर्कितं मया। हन्त! सर्वमपि पतनप्रायं परिकरं परिवहन्ति पादपावल्यः पृथिव्याम्। पातुकानां पत्राणां तु पतनायैव जाता किमु प्रादुष्क्रिया? पथि प्रवर्धमानः पशुरपि हरितपर्णानि पश्यन् झगिति प्रलम्बायते ग्रीवां तानि गुडेरकीकर्त्तुम्। विस्मृतभूतभाविचिन्ताज्वाला लीलालयलीनमानसा बाला अपि निरर्थकं त्रोटयन्ति मोटयन्ति च तानि। प्रडीनोड्डीनसंडीनानि विदधतो विहगा अपि तूर्णं स्वस्वकुलायमधिश्रयन्तोऽधिक्षिपन्ति पर्णानीतस्ततः। प्रबल-वेगं वहमानः पवनोऽपि परःसहस्राणि पातयति पर्णानि निःसूकतया। अगदङ्कारा अपि निरुपमौषधनिर्माणाय चूर्णयन्ति सहस्रशः पर्णानि गुटिका घटयितुम्। वैज्ञानिका अपि तत्तद्गुणदोषनिरीक्षणार्थं परीक्षन्तेतरामनलादिषु दलानि। पुष्पाणामपि नूनमियमेव कदर्थना प्रत्यहं दृष्टिपथमवतरति। काचिच्चतुरा कोमलकरपल्लवैर्विचिनुते प्रसूनचयं व्यालश्यामलं केशकलापमलं-कर्त्तुम्। गुम्फति काचन मालिकी मनोहरा मालाः संगृह्य नवजातसुमनसो विक्रेतुमहर्मुखे। देवार्चनपरः कश्चित्सद्यस्कानि सुमानि पुनरन्वेषयतीतस्ततः। फलानां तु दशाऽतीव दयनीया। तत्र तु सार्वत्रिक उत्पात एव नरीनर्त्ति समन्ततः। फलेग्रहिभवनमेव नामाभिभवः। आमफलेष्वपि कुमाराणां प्रस्तर मारः। शुकादिपक्षिणां तीक्ष्णचञ्चुवेधः। परिपक्वेषु हि 'लुनीहि-लुनीहि' इति निर्दयं समेषां घोषः। रात्रिञ्चराणां तस्कराणां तात्कालिकश्छेदः। अहो! स्कन्धमपि छिन्दानं निन्दानं निभालयामः। शाखाः प्रशाखा अपि कृन्तन्तो निरीक्ष्यन्तेऽनेकशो वर्धकयः। मूलमपि नानुकूलं वर्तते, तत्राप्यनेकेषामाखूना-

मुपप्लवः। तथापि हरितभरिता विलसति वृक्षावलिः, किमीदृशं गुप्तं सुखमनुभवतीति नानुभूयते मया।

मन्दमारुताऽऽन्दोलिता हर्षोत्फुल्ला इव सुमनसां श्रेणिमिषतो हसन्त इव पत्रकम्पनव्याजेन करपल्लवान् विधूनयन्त इव विटपिनो व्याहार्षुः— "मित्र! न वेत्सि किमयमेवास्ति जीवनसंग्रामः। निपतन्तितरां प्रतिपलं सुखानामुपरि दुर्धरा दुःखानां धाराः। सर्वत्र साम्यं कक्षीकरणीयमित्यस्मदीयानां जीवनलक्ष्यम्। पतनच्छेदनभेदनादिव्यथा या या भवता प्रथितास्ता सर्वा अपि काञ्चिद् नव्यामुन्मेषरेखां बिभ्रतीतिनाविदितचरं तत्त्वचञ्चुभिः। अन्तःस्निग्धानां तत्वज्ञानां व्यथापरिवेष्टितानामपि किं विघटितमस्माकम्? पत्रपुष्पफलादिसम्पत्तौ किं नैयून्यं समागतम्? समाःशतं सहिष्णुतया सोढार एव जीवन्तितरां नारेकणीयमत्र"।

'समस्तसामाजिक—नैतिकाध्यात्मिक—कार्यकलापेषु किमस्ति तद् यत्सर्वत्रापि महत्वमञ्चति?' पृष्टं केनचिदनुसन्धायकेन।

'विवेक एव इति' प्रत्यवाचि केनचिदनुभविना।

एकस्यां चतुष्पथवाटिकायां चङ्क्रम्यमाणो निर्गतोऽहम्। कृष्णनीलपीत-लोहितादिनानावर्णैर्मञ्जुला विमला प्रसूनराजी क्षुपेषु विराजमाना निशमिता। यथा-यथा तत्सामीप्यमासेवितं मया, तथा-तथा सा सुरभिगन्धवन्ध्येत्यन्वभावि। सव्यङ्ग्यमुट्टङ्कितं तदैव—'हा! सौरभशून्यानां नाम्ना सुमनसामपि किं नाम मूल्यमिह? जलशून्यं कूपमिव गुणशून्यं रूपमपि नहि समीपयन्ति रसं पिपासवः पान्थाः इव द्विरेफाः। कथमिव बिभर्ति भारभूतं वस्तु जडाशया प्रकृतिः। एतादृग्भावादभाव एव किं न श्लाघनीयः'?

सर्वमपि मूकमुखं मर्षयन्ती बालजल्पितानीव मत्कल्पितानि मम्मन्यमाना स्मितमुखी सुमश्रेणिर्व्याजहार—'सौम्य! यदस्ति तदस्त्येव किमपि वस्तु। वस्तु वस्तुत एवास्तु अनन्तधर्मात्मकमिति भगवतां स्तुत्योऽभिप्रायः। स्वविचाररूढ्या किमप्यनालोच्याऽल्पज्ञोऽवज्ञां विधत्ते सा तस्यैव विचारमान्द्यस्य, न च वस्तुनः। विचारय भद्र! मत्तः किं न वर्धते शोभा वनिकायाः? मयि किं न विलसति नैर्मल्यनामकोऽद्वितीयो गुणः? नाहं विदधामि किं स्मितमुखी केषामपि मद्गृहसमागतानां स्वोचितमातिथ्यम्? मद्गतमसुरभित्वमपि किं न ख्यापयति सुरभितानां सुमनसां वैशिष्ट्यम्? गुणागुणविवेचनमपि दृष्टिभेदार्पितमेव न त्वैकान्तिकम्। ततस्तात्त्विको भव, न तु तुच्छतयोच्छल यदृच्छया'

# सुमनसां सम्मानम्

पुष्पाणि ! किमीदृशं पुण्यव्रतमाचरितं युष्माभिर्यत् सर्वजनीना सुषमा युष्मानालिङ्गति ? समेषां रोगिणां योगितां भोगिनां वा चेतः स्वस्वदृष्ट्या दिष्ट्या समुत्कं भवति युष्मद्दर्शनार्थम् । तरुभिरपि मस्तकस्थायिका स्वीकृता युष्मदीया । दुर्लभदर्शनानां देवानामपि पदारविन्दसेवाऽनायासमासादिता भवद्भिः । लसल्लावण्यानां ललनानामपि धम्मिल्लशोभा प्रगुणीकृता भवद्भिरेव सायं प्रगे । प्रतिशुभावसरं युष्माकमुपस्थितिरवश्यं प्रार्थनीया । सम्माननीयाऽतिथिमहोदयानामप्यभिनन्दनं युष्मत्समर्पणेनैव सम्पद्यते । किमत्र रहस्यम् ? को हीदृशोऽन्यत्राऽसुलभो भवत्सु सुगुणः ? उन्मनायते मदीयं मनो नूनमिदं हार्दमवगन्तुम् ।

पुष्पाणीव सुवचनानि किरन्ति प्रसूनानि प्रत्युत्तरपरायणान्यभवन्— ' भद्र ! प्रकृतिविमलानां नितान्तकोमलानां सुमनसां किमसुलभम् ? परोपकारायैव येषामनघं जीवनं कथङ्कारं न तानि सम्माननीयानि सन्तु समस्तैर्जीवलोकैः ? बलिदानायैव येषां कायोत्सर्गः कथं न तान्यर्हणीयानि भवन्तु भुवनत्रये ? इयमेव रहस्यमयी प्रकृत्याः प्रकृतिर्यदनिच्छतामुपरि वर्षति सार्वत्रिकी शुभेच्छा । महेच्छानामुपरि चानिच्छा सर्वतोमुखी ' ।

## मूलं मूलम्

मस्तकस्थास्नुना मधान्धलेन फलेनैकदा मूलं प्रतिकूलयताऽभाणि—'अलब्धजीवनमूल्य मूल ! किं भूगर्भपतितं जीवनं यापयसि ? प्रैक्षि त्वयाकर्ह्यपि समाः शतं जीवतापि जगतां सुषमा ? केयमन्धकारमयी तपस्या यत्र न नाममात्रः कोऽपि ज्योतिःस्फुलिङ्गः समुच्छलति ? न त्वत्सदृक्षस्य कृते सुखशब्दःस्वप्नेपि कोषगतः। न कोऽप्यनुभवो वात्तावरणस्य ते। न कापि शीतोष्णादिक्रियायाः प्रतिक्रिया यत्र। हन्त! चिररात्राय शायिका न कथं पार्श्वत्वक्परिवर्तनमीहते। क्षणं विलोकय, पत्राणि, पुष्पाणि, फलानि च, यानि प्रतिदिनं कांस्कान् सद्यस्कान् जीवनानन्दाननुभवन्तितमाम्। कीदृशीं तानि विश्वजनीनां श्लाघां वृण्वन्ति। जातु त्वमपि बहिर्मुखीभूय जगल्लीलां निभालय।

गहनगिरिगुहागतयोगिमानसमित्रान्तर्मुखं मूलं भावभङ्ग्या भाषितुं लग्नम्—'स्वस्त्यस्तु युष्मभ्यम्। अनवरतं पुष्पितानि फलितानि सन्तु सन्तानानि मम हार्दिकमिदमाशीर्वचः। भूरि-भूरि विलोकिता मयापि जगतांलीला। सुखतयानुभूयमानं बहिर्मुखानां सुखमपि दुःखपरम्परितमेव। अवसरलभ्या विकस्वरतापि म्लानताया आकारणमेव। स्वार्थिभिः क्रियमाणा भावत्की श्लाघापि वधायैव। तत्त्वतः श्लाघा त्वन्तर्मुखानामेव जगति जाजायमाना दृष्टा। मर्मज्ञो मालिको न किं कुरुते मूलाभिषेकं यथाकालम्। घनेनापि शाम्यते यथासमयमस्मदीयानां पिपासा। वसुमतीमाता तु प्रतिपलमभिषिञ्चति ध्रुवमस्मान् हार्दिकस्नेहेन। अपत्यानि! यदहं बहिर्मुखीभावं भजेयं तदानीं भवादृशां का दशा भवेत् ? अनुकूले मूले सर्वाण्येव मूल्य-

र्हन्त्युपरितनानि । तन्नष्टे नष्टानि तानि तत्कालमेव । अस्तु, मत्तपस्यया सर्वेऽत्र सुखिनः सन्तु इत्यनारतं मदीया प्रार्थना ' ।

नास्ति कोऽपीदृशः क्षणो, घटिका, दिवसः, पक्षो, मासो वा । यस्मिन् न जातं कस्यापि महात्मनो जन्म निर्वाणं च । तदानीमयमेव शुभोऽवसरः पुण्याहं चेति कथं तत्वज्ञेन स्वीकरणीयमत्र ?

नहीह कोऽपीदृशोऽखिलपृथिव्यां धूलिकणो यो न पवित्रितो महामनसां चरणस्पर्शेन । तदानीं कथमिति प्रतिपत्तव्यं यदियमेव मोक्षदा परमपवित्रा तीर्थभूमिः ?

तद्वद् नहीदृक्षं किमप्पलब्धावसरमक्षरं यन्न वाङ्मयतां गतं भगवतां मुखारविन्देषु । तदानीं कथमिति निर्णेयं यदमून्येवाक्षराणि प्रत्यक्षफलानि ?

हन्त ! हन्त !! आनन्त्यं भावयतां सर्वमपि स्व - स्वपक्षकक्षीकृतं स्त्यानीभूतं जाड्यं तरसा तरलीभूय द्रवति ।

मोहमयीनगर्यां शिखरचन्द्रप्रभृतिभिः कतिभिश्चन श्रावकैर्बहुधा प्रेरितं यद् ग्रीष्मकाले मस्तकारण्यं (मथेरान) अतीव रमणीयं सुखं स्थलं विद्यते। भवद्भिरपि कदाचिदवसरं लब्ध्वाऽवश्यं द्रष्टव्यम्। नागता वर्षद्वयेऽनुकूला परिस्थितिस्तत्र गन्तुम्। किन्तु तृतीये वर्षे (२०२० मितेऽब्दे) जातं "कान्तिभाई" प्रेरणातोऽचिन्तितं 'कल्याण' कैम्पंगमनम्। तत्र सैन्धवानां[1] विशाला वसतिः। विसनदास - नारायण - गंगाराम - प्रभृतीनां अदम्योत्साहेन भूरिशो भद्राः स्त्रियः पुरुषाश्च सत्सङ्गलाभमग्रहीषुः। बहुभिः पुनः मांसमद्यादि-प्रत्याख्यानं व्यधायि। ततो मस्तकारण्यं दशक्रोशमात्रमिति मत्वा तत्र गम-नाभिप्रायोऽजनि ध्रुवमस्मदीयः। नवदिवसानि तत्र (कैम्पे) स्थित्वा भीष्मोष्ण-काले वयं मस्तकारण्यमस्तकमारोढुं प्रस्थिताः। अष्टमगुणस्थानादिव "नेरलग्रामा" दहीयमानपद्धत्या पर्वतं चटितुं लग्नाः सायंकाले। पादे विपादिकायाः पीडा, स्कन्धे स्वोपधिभारः, पानीयपात्रं च हस्ते। तत्काल-गृहीतभोजनानप्यस्मान् अस्तमनाय प्रस्थितः सूर्यः शीघ्रं चलितुं प्रेरयति स्न तदानीम्। प्रगतिवादिनां किं दूरमितीवार्वाक् सूर्यास्तमनात् रात्रौ निवासाय-प्राप्ताः 'जुम्मापट्टी' नामकं प्रथमं वाष्पयान - स्टेशनम्। मुनिवद् दिवसे हि गमनागमनं कुर्वाणं रात्रौ यथास्थानस्थितं लघुतमं वाष्पयानं नहि रात्रिञ्चरमिति सुखं प्रतीक्षालये स्थानमासा वयम्। सहजमनोहरं तत्रत्यं स्थलम्। सायंकालिकः शीतलो वातः। अन्यत्रादिवासिभ्यो नान्येषां दर्शनम्। षट्क्रो-

---

१ सिन्धियों की

शीयविहारखिन्ना एकयैव जागरया नीरवशीतलरजन्यां झटिति सुप्तोत्थिताः प्रतिक्रमणसमयात् किञ्चित् पूर्वं बोधमगाम वयम्। पुनरहर्मुखे कुट्टिमां पुनरपकां कुण्डलिनीमिव कुटिलाकारां सुगमामुन्नतगामिनीं पद्धतिं स्वीकृत्य सोत्साहमेकेनैव 'पन्नालालेना'ऽन्वीयमानक्रमपङ्क्तयः प्रस्थिताः। एकपदे नात्यूर्ध्वगमनं शिवङ्करमितीव मन्ये पन्थाः पर्वतं प्रदक्षिणीकुर्वन् इव भ्रामं-भ्रामं उपरिष्टाद् गन्तुं प्रयतते, इत्यनुभूतं मया। अवेगापि गतिरारोहेऽधारयद् वेगं श्वासोच्छ्वासानाम्। शीघ्रं गन्तुमुत्कमपि मनः वपुर्विश्रान्तिमाकाङ्क्षद् वारं वारम्। दूरे-दूरे भ्रान्त्वापि पुनः-पुनः प्रेमिकेवाऽध्वन्याऽऽमिलति वाष्पयानसरणिः। अविश्रान्तप्रस्थितानां किं दूरम्-इतीव प्रलम्बमपि मार्गं स्तोकीकृत्य नीरन्ध्रवृक्षघटासटितमुपरिभागमगमाम वयम्। दृष्टं मस्तकारण्ये 'स्वागत'मिति वर्णाङ्कितं तोरणाकारं पट्टकम्। प्रस्वेदक्लिन्नविग्रहानस्मान् मातेव सघना वृक्षावलिः शाखाविधूननव्याजेन वीजयन्तीवाऽपनीतस्वेदखेदान् व्यधत्त। विरक्ता इव गैरिकरागरक्ताः सर्वा अपि पद्धतयोऽघनेऽपि नभसि सघनच्छाया अनुपातकानां नः स्वागतं कुर्वन्त्य इव विलोकिताः। भोगिनोऽपि योगिन इव तत्र भ्रमन्तः काषायाम्बरधराः स्वत एव भवन्तीत्यन्वभावि। किं पूर्वं योगिनामेतादृशमस्तकारण्यनिवासेनैव गैरिकाम्बरधारणपरम्परा प्रचलिता। सबालामेकामेव व्यक्तिं धारयन्त्यो द्रव्यभिक्षां याचमाना इव 'रिक्शा' वाहिन्यो (गन्त्र्यो) मनुष्यत्रयसंचालिता बह्व्यो दृष्टाः। केचिद् घोटकारूढाः सबालस्त्रीका यात्रिका इतस्ततः प्रेक्षणपरायणा निभालिताः। अधुनिकेऽपि युगे नैकापि तत्र मृत्तरीति[1] साश्चर्यं अवेदि। मास्तु स्पर्धा केषामप्युन्नतावनतसद्मनामितीव मन्ये तत्र नैकं सद्मापरं सद्म प्रेक्षितुमलं प्रायः। आपणवीथिं

---

[1] मोटर

विरहय्य नहि तत्र कुत्रापि एकत्वभावनां भावयन्तीव सद्मनां श्रेणिः। पक्षिणामेव तत्र कोलाहलः न तु मनुष्याणाम्। दिवसेऽपि नीरवशान्तिरनभूयते तत्र यात्रिकवर्गैः। संकुलता तत्र भोजनालयेष्वेव केवलम्, प्रायः नहि स्वयम्पचास्तत्रागता गृहिण्यः। पूर्वं दयानन्दकुटीरे पश्चात् 'दिलखुशबंगला' मध्ये स्थितिमाप्ता वयम्। विशालं निर्जनमनेकवृक्षावलिपरिवेष्टितं मन्दिरं तत्। आगता मुम्बापुरीतः, समातृपितृका मानसिंहाद्याः कतिचन श्रावकाः सेवार्थम्। तेऽपि तत्रैव निवासमापुः सुखम्। एकाकिनामपि तत्र प्लवङ्गमानां संगमेन सुखं लगति मनः। षट्चत्वारिंशत्तत्र पर्वन्तप्रान्तानि (पोइन्ट) दर्शनीयानि। तेष्वपि 'पनोरमा' 'लुईझा' 'वन्ट्री' 'मंकी' सनसेट—प्रभृतीनि अष्टौ महाप्रान्तानि विशेषद्रष्टव्यानि। वयमपि प्रातःकाले प्रान्तदर्शनार्थं गताः। मार्गे देहचिन्तया निवृत्ताः सन्तो विशालं 'सनसेट' प्रान्तं दृष्टवन्तः। महाभयङ्करा गर्ता, नद्यः, हरितभरितं प्राकृतमनुसमुद्यानं ततो दृष्टिगतं जायते। काल्पनिकानां कवीनां चित्रकाराणां तत्र बह्वनुभवनीयं वस्तु। तत्रस्थितेन विहितं मया ध्यानम्। अन्तर्जल्पा विकल्पास्तत्र सुखं विश्रान्तिमापुः। पूर्णप्राये ध्याने आयातुं लग्नास्तत्र भूरिशो यात्रिकाः। केचिदाङ्ग्लाः, केचित् पारसीकाः, केचिद् गुर्जराः, केचित् पञ्चापीयाः, कानिचिद् नवदम्पतीनां युगलानि, केचित् सपत्नीका वर्षीयांसः। केचिदारोग्यमभिलाषिणः, केचिदटाट्यामिच्छवः, केचिद् नानाप्रश्नप्रवणाः कुतूहलिनो बालाः। केचन पद्गाः, केचनाश्वारोहिणः, केचिद् रिक्शाकक्षास्थाः, केचिद् प्राथमिकाः, केचित् प्रातिवार्षिकाः, केचन धनाढ्याः, केचन साधारणाः, केचन वैद्याः, केचन वाकीलाः, केचित् सन्यासिनः, केचिदभ्यासिनः, किन्तु सर्वेषां मुखादेकैव वाणी—अहो! कीदृशं प्राकृतिकं दृश्यम्? कीदृशी कारस्कराणां छाया?

कीदृशी नीरवता ? कीदृशी च शान्तिः ? ग्रीष्ममध्याह्नेऽपि गच्छतां मुनीनां न चरणदाहः । रात्रौ न बहिः शयनस्यावश्यकता । गृहान्तरालेऽपि शैत्यानुभवो जायते तत्र । सुखं परिधेयं वस्त्रद्वयम् । दिवसे वृक्षाणां परितो भूरिशो भ्रमन्तोऽपि दंशमशका रात्रौ शयाना इव नहि दशन्ति, नार्दयन्ति च सुखनिद्राणान् यात्रिकान् । तेन न रात्रौ तत्र मशकापवारिकाया आवश्यकता । रात्रावतिरमणीयं तत्र दृश्यम् । अपूर्णचन्द्रोऽपि शाखिपल्लवमध्यगतः परोलक्षान् वृत्तचन्द्रान् प्रतिबिम्बयति । न नाममात्रमपि चौरपश्यतोहरपारदारिकाणां तत्र भयम् । बाला युवतिः कापि कुत्रापि भ्रमतु निःशङ्कम् । पतितं विस्मृतमपि वस्तु पुनः करायत्तीभवति अनायासम् । भ्रातृवत्सला इव पन्थानः कियदपि भ्रमित्वा पुनः परस्परं मिलन्ति तत्रत्याः । कुत्र नयतितरां अयं पन्था इति कृतस्पष्टोल्लेखानि प्रतिकोणमूर्ध्वीकृतानि तत्र पट्टकानि । द्विसहस्रचतुःशतनवतिफिटपरिमिता अस्योन्नतता । विंशतिक्रोशपरिमितमस्य वर्गीकृतं क्षेत्रफलम् । त्रिसहस्रमानाऽस्य स्थानीया वसतिः । द्विशतदशसंख्याकानि तत्र पृथक् - पृथक् भवनानि । चतुर्विंशतिसंख्याकानि पुनर्होटलानि । तत्र शयनासनानानां सुन्दरा व्यवस्था । तेष्वपि 'रीगल' 'रग्बी' अशोकाख्यानि निरामिषभोजनानि । षट्संख्यामानानि पुनर्भोजनगृहाणि । (रेस्टोरेण्ट)। पदयात्रिणां सार्धत्रिक्रोशमितो लम्बोऽध्वाऽस्यारोहे । वराकं लघिष्ठवाष्पयानं तु सप्तक्रोशान् कुटिलं भ्रमत्प्राप्नोत्युपरि भूभागम् । सप्ततिसंख्याका रिक्षावाहिन्यः । अश्वानां शतकं शोभते तत्र । वारत्रयं वाष्पयानं आगच्छति प्रतिदिनं प्रायस्तत्र । नवत्यङ्कमाना गण्यते तत्रोच्चैरुष्णता । 'मेलेट' नाम्ना गौराङ्गेण 'थाना कलेक्टरेण' निवासितमेतत् पर्वतस्थलम् । 'आदमजी पीरजी' नाम्ना मुस्लिममहाढ्येन निष्कासितो वाष्पयानमार्गः । प्रतिमस्तकं तत्र लगति एकं

रूप्यकं कररूपेण प्रविविक्षूणां नराणाम् । बालानां चत्वार आणकाः । 'न दृष्टं मस्तकारण्यं किं दृष्टं यात्रिणा' इत्युक्तिं चरितार्थयद्भिरिव चन्दनमुनि - लालमुनि - चौथमुनिभिः नयनायनीकृतमेतद् रमणीयपदम् । अष्टाह्निके प्रवासे निभालितानि प्रान्तानि, स्रोतांसि च । प्रतिवासरं व्यधायि विभिन्ने स्थले ध्यानम् । प्रान्तेषु 'पनोरमं' त्वतीव मनोरमम् । सकृदेव रविवारे जातं सार्वजनिकं व्याख्यानम् । इतरदिनेषु विहिता साहित्यसाधना । तत्र विशालं साहित्यनिधिमभिवृद्धिं नयतस्तेरापंथशासनस्य प्रथमशतावधानिनः श्रीधनमुनेः साध्वीपुङ्गवायाः श्रीदीपायाश्च कनीयसा भ्रात्रा, भावितात्मनः श्रीकेवलचन्द्र-स्वामिनोऽङ्गजेन **चन्दनमुनिना** मस्तकारण्यस्मृतौ विरचिताः प्रगतिपटिष्ठा लघिष्ठाः सार्वजनीना नवीनाः केचन निबन्धाः । अन्ये च मुम्बापुरी - प्रवासे रमणीयतरे पारलाप्रदेशे साधनाश्रममधिवसतः सायं प्रातः समुद्रपुलिने सानन्द मटाट्यां कुर्वतः प्रकाशं गताः । परे च अन्यान्यस्थलेष्वपि लिखिता अत्र संकलनां नीताः । एवं विभिन्नशैलीसंपृक्तोऽयं लघुसंदर्भो विज्ञानां चाल्पज्ञाना-मपि उपयोगी भावीति निर्विचिकित्सितम् । संवति २०२० वर्षे शुभमस्तु ।



चन्दनमुनिः

# शुद्धिपत्रम्

| पृष्ठानि | पङ्क्तयः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १८ | थगयति | स्थगयति |
| ४ | १४ | नैरन्तर्यैंण | नैरन्तर्येण |
| ६ | १६ | घृति० | घृति० |
| ८ | ३ | प्रसृत्वराश्च | प्रसृत्वर्यश्च |
| १३ | ६ | अरुन्तुदो | अरुन्तुदा |
| १६ | १३ | विश्वविसृत्वरा | विश्वविसृत्वरी |
| २७ | ३ | वाष्ययानस्य | बाष्पयानस्य |
| २८ | कोष्ठक (६) | स्वतौ | स्वयं |
| ३३ | ७ | मविष्कुर्वन्ति | माविष्कुर्वन्ति |
| ३९ | ३ | सत्य | सत्यं |
| ३९ | ५ | तदेव सत्य | तदेव सत्यं |
| ३९ | १५ | द्रागयन्ती | द्राघयन्ती |
| ४५ | ५ | उक्तमप्यस्ति | उक्तमप्यस्ति |
| ४६ | ७ | ॠषभ० | ऋषभ० |
| ५१ | श्लोके | शिशरीकृतः | शिशिरीकृतः |
| ५३ | १ | एकताया | एकतायाः |
| ५३ | ६ | स्वसदृशै | स्वसदृशैः |
| ५३ | ६ | तेषा | तेषां |
| ६३ | २ | यत, | यतः |
| ६३ | ३ | अस्मिः | अस्मि, |
| ७१ | ९ | नैद० | नेद० |

| पृष्ठानि | पङ्क्तयः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७१ | १५ | सर्वौंषध्यः | सर्वौषध्यः |
| ७३ | ४ | परात्परा० | परस्परा० |
| ७३ | १४ | पूतिः | पूर्तिः |
| ७६ | ८ | नावबुद्धसे | नावबुध्यसे |
| ७८ | ४ | वयस | वयसः |
| ७८ | १२ | तावन्नेकाङ्क्षिसङ्क्षितयः | तावन्नैकाङ्क्षितया |
| ८० | ६ | पित्यस्मदीयानां | मित्यस्मदीयानां |
| ८१ | ६ | पान्थाः | पान्था |
| ८२ | २ | योगितां | योगिनां |
| ८४ | (कोष्ठक) ७ | किमप्प० | किमप्य० |

## लेखक की महत्व पूर्ण रचनाएँ

संस्कृत :—

अर्जुनमालाकारम् (प्रेस में)
प्रभवप्रबोधः *
अभिनिष्क्रमणम् *
ज्योतिःस्फुलिङ्गाः
उपदेशामृतम् *
वैराग्यैकसप्ततिः *
प्रबोधपञ्चपञ्चाशिका *
अनुभवशतकम्
संवरसुधा
गीतिकात्रयोदशी
प्रास्ताविकश्लोकशतकम् *
पञ्चतीर्थी
आत्मभावद्वात्रिंशिका *
पथिकपञ्चदशकम् *
आम्रषोडशकम्*

प्राकृत :—

रयणवालकहा *
जयचरिअं*
णीई–धम्म–सुत्तीओ*

हिन्दी :—

अन्तर्ध्वनि
राजहंस के पंखों पर
मौनवाणी
मलयज–मुक्तावली
मलयज की महक
संतों के सुनहरे शब्द
अध्यात्म-पदावली
सोना और सुगन्ध
व्याख्यान-बत्तीसी*
गुर्जर गीताञ्जली (गुजराती) *
पंजाब पचीसी *

---

* अप्रकाशित

# मुनि चन्दन

जन्म : वि० सं० १९७१, मार्गशीर्ष कृष्णा एकादशी, सिरसा (पंजाब)

दीक्षा : वि० सं० १९८०, प्रथम ज्येष्ठ पूर्णिमा, सुजानगढ़ (राजस्थान)

अग्रगण्य : वि० सं० १९९६, छापर (राजस्थान)

साहित्यनिकाय व्यवस्थापक : वि० सं० २०२२ फाल्गुन कृष्णा तृतीया, डाबड़ी (राजस्थान)

● आचार्य श्री कालुगणि के सान्निध्य में संस्कृत, प्राकृत आदि भाषाओं का गंभीर अध्ययन। बाल्यकाल से कविता की अभिरुचि। संस्कृत, प्राकृत, हिन्दी, राजस्थानी, गुजराती, पंजाबी आदि भाषाएँ आपके कविता की विषय बनी हैं। संस्कृत में लिखे हुए आपके ललित एवं सरल गद्यकाव्य "प्रभवप्रबोधः, अभिनिष्क्रमणम् तथा आर्जुनमालाकारम्" आदि तेरापंथ शासन के पाठ्यक्रम में निहित है। आपकी रची हुई सुमधुर गीतिकाएँ तो सहस्रों लोगों के द्वारा गाई जाती हैं। आप साहित्यिक होने के साथ - साथ एक तपे हुए अनुभव-सिद्ध अध्यात्म-योगी भी हैं।

प्रस्तुत प्रयास विद्यार्थियों के लिए विशेष उपयोगी होगा ऐसा आप का दृष्टिकोण है।